स्पष्टध्रुवेषु सिद्धेष्विदानीं परास्यानयनार्थमिष्टस्पष्टध्रुवसंबन्धिनौ गतगम्यौ भाज्यहरौ साध्यौ, तद्यथा—

> स्फुटध्रुवाग्रस्थकलाः प्रयाता भाज्याः स्युरेभ्यो गणयेच्च भोग्यान् ।
> इष्टध्रुवात्प्रागपरस्थयोश्चान्तरे क्रमात्तौ गतगम्यहारौ ॥ ८ ॥

अन्वयः—स्फुटध्रुवाग्रस्थाः कलाः प्रयाता भाज्याः स्युः । एभ्यो भोग्यान् (भाज्यान्) गणयेत् । इष्टध्रुवात्प्रागपरस्थयोः (ध्रुवयोः) च (ये) अन्तरे तौ (इष्टध्रुवस्य) क्रमेण गतगम्यहारौ भवतः ।

विवरणम्—स्फुटध्रुवाणामग्रस्था अवयवीभूता याः कलास्तासां गतभाज्य इति संज्ञा । गतभाज्यकलास्वेकमितध्रुवस्य कलाभ्योऽपनीतासु शेषं भोग्यभाज्यो भवति । अथ हारानयनम्—अभीष्टध्रुवस्य पूर्वगामिध्रुवेण सह यदन्तरं स गतहारः । अग्रिमध्रुवेण सह यदन्तरं स भोग्यहारः, इति हारस्य गतैष्यत्वे विवेकः ।

उदाहरणम्—चतुर्थन्यासे स्पष्टतिथिध्रुवाणामवयवीभूताः कलाः ३३४′, ३९२,′ ४६९′ इत्यादयस्तत्तत्तिथिध्रुवाणां गतभाज्याः सन्ति । अथ भोग्यभाज्यानयनम्—तत्र तिथिध्रुवः २९ ३३४′, अस्य गतभाज्यकलाः ३३४′ एकमिततिथिकलाभ्यः ७२०′ अपास्य जनितं शेषं ३८६′, तस्यैव तिथिध्रुवस्य भोग्यभाज्यो जातः । परं तु गतभाज्येभ्य एव प्रायः सर्वे परास्याः सिध्यन्ति । एष्यभाज्यानयनप्रसङ्गो विरलः । अत एव वक्ष्यमाणरीत्या प्रसङ्गे प्राप्त एव भोग्यभाज्यः साध्यो नान्यत्र । एवमपि नक्षत्रयोगाणां भाज्यानां गतैष्यत्वे विवेकः ।

अथ हारानयनम्—स्फुटध्रुवानुत्क्रमतो नामोत्तरस्मात्पूर्वं विशोध्य लब्धास्तिथिहाराः ७७८′, ७९७′, ८०१′ इत्या० । अथैनेषां गतगम्यत्वमुच्यते—यदीष्टतिथिध्रुवः ति० ३० ३९२′ तदस्मात्पूर्वमन्तरं ७८७′, गतहारः, उत्तरमन्तरं ७९७′ भोग्यहारः । तथैवाग्रिमतिथिध्रुवः १ ४६९ अस्मात्पूर्वमन्तरं ७९७′ गतहारः, उत्तरमन्तरं ८०१′ भोग्यहार इत्यपि सुगमम् । एवमितरेषां तिथिनक्षत्रयोगाणां हारानयनं तेषां गतगम्यत्वं च सुगणकैर्ज्ञेयम् ।

इदानीं परास्यानयनमुच्यते । अत्र परास्यशब्दो मध्यमनिष्पन्नकालात्स्पष्टानां तिथिनक्षत्रयोगाणामवसानपर्यन्तं योऽवधिस्तं बोधयति ।

> स्फुटध्रुवाणां हरभाज्ययुग्मैः प्रायो गतैः सप्तमकोष्ठकस्थाः ।
> साध्याः परास्या हि कदाचिदेष्यद्वन्द्वेन चक्षे तमिह प्रसङ्गम् ॥ ९ ॥
> पूर्णध्रुवाणां क्रमशः स्थितानां यदा भवेदेकतमस्य लोपः ।
> तदा तु पूर्वध्रुवकस्य भोग्यद्वयेन साध्यः ■ परो धनं स्यात् ॥ १० ॥

**द्विः स्पष्टमानं ध्रुवकस्य सिध्येत्तदाऽऽद्यमानस्य गतद्वयेन।**
**साध्यः पराख्यः स ऋणं तु नित्यमथ त्रयाणामवसानकालाः ॥११॥**

**अन्वयः**—स्फुटध्रुवाणां यातैर्हरभाज्ययुग्मैः सप्तमकोष्ठकस्थाः पराख्याः साध्याः। कदाचिदेप्यद्वंद्वेन ( साध्याः ) तत्प्रसङ्गमिह चक्षे ॥ ९ ॥ क्रमशः स्थितानां पूर्णध्रुवाणां यदैकतमस्य लोपो भवेत्तदा तु पूर्वध्रुवकस्य गम्यद्वयेन परः साध्यः स परो धनं स्यात् ॥ १० ॥ यदि ( कस्यचित् ) ध्रुवकस्य द्विः स्पष्टमानं सिध्येत्तदाऽऽद्यमानस्य गतद्वयेन पराख्यः साध्यः स नित्यमृणम् । अथ ( आगामिनि श्लोके ) त्रयाणामवसानकालाः ( उच्यन्ते ) ॥ ११ ॥

**विवरणम्**—प्राक्सिद्धानां स्फुटध्रुवाणामेकैकस्य प्रायो गतेनैव भाज्यहरयुगुलेन सप्तमकोष्ठकादृणगतानि पराख्यपलानि गृह्णीयात् । कदाचिद्भोग्येन भाज्यहरद्वंद्वेन पराख्यग्रहणमवश्यं भवति तत्प्रसङ्गोऽग्रिमे श्लोक उच्यते ॥ ९ ॥ एकद्वित्र्यादिक्रमेणाधोऽधो न्यस्तेषु स्पष्टध्रुवेषु पूर्णेषु यदि कस्यचिदेकस्यादर्शनं स्यात्तदा लुप्तध्रुवस्य यः पूर्वगामी ध्रुवस्तस्य भोग्येन भाज्यहरद्वंद्वेन सप्तमकोष्ठकात्पराख्यपलानि गृह्णीयात् । परं त्वेतानि भाज्यहरयोर्भोग्यत्वाद्धनगतानि भवन्ति ॥ १० ॥ ननु कदाचिदेकस्यैव ध्रुवस्य द्विवारं स्पष्टमानं लब्धं चेत्तदा कतरस्य भाज्यहराभ्यां पराख्यानयनं कार्यमिति चेत्तदुच्यते—द्विः स्पष्टमानमिति। ईदृशप्रसङ्गे द्वितीयं स्पष्टमानमुपेक्ष्य प्रथमस्यैव गताभ्यां भाज्यहराभ्यां पराख्यः साध्यः । अत्र भाज्यहरयोर्गतत्वात्तत्साधितः पराख्योऽप्यृण भवति । अथ तिथिनक्षत्रयोगाणां समाप्तिकालानयनम् ॥ ११ ॥

**उदाहरणम्**—चतुर्थन्यासे स्पष्टतिथिगृहमधिष्ठिताया अमाया गतभाज्यहराभ्याम् ३९२′, ७७८′ आभ्यामुपकरणाभ्यां सप्तमकोष्ठके –२९ घ० ४६ पलमितः पराख्यो लभ्यते । यथा—

| | पलानि |
|---|---|
| पार्श्वस्थस्य ७७८′ हारोपकरणस्य संमुखम् मूर्धस्थभाज्योपकरणात् ३०० कलानामधश्च | –१३६७ |
| ,, .... .... ,, .... ९० ,, .... | – ४१० |
| ,, .... .... ,, .... २ ,, .... | – ९ |
| ऐक्यम् .... ,, . ३९२ ,, ..., | ....–१७८६=–२९घ०४६प० |

एवं पञ्चमन्यासस्थाः प्रायशः सर्वे पराख्या यातैरेव भाज्यहरद्वंद्वैः साधिताः । अथ भोग्याभ्यां भाज्यहराभ्यां पराख्यानयनस्योदाहरणम्—चतुर्थन्यासे स्पष्टतिथिगृहे पञ्चम्या लोपो दृश्यते । अत्र पूर्वतिथिर्या चतुर्थी तस्या गतभाज्यः ७०१′, एता

एकतिथिकलाभ्योऽपास्य ७२०′−७०९′=१९ जनितं शेषं भोग्यभाज्यो जातः । अनेन भोग्यहारेण च १९′, ७८७′ सप्तमकोष्ठे +६७ प० पराख्यो लभ्यते । अत्र हरभाज्ययोर्भोग्यत्वात्पराख्यो धनम् ॥ ९ ॥ १० ॥

द्विः स्पष्टमानमित्येतस्योदाहरणम्—चतुर्थन्यासे तिथिगृहे षोडश्यास्तिथेर्द्विविधं स्पष्टमानमुपलब्धं, तयोर्द्वितीयमुपेक्ष्य प्रथमस्य गतभाज्यहराभ्यां ४४′, ६६२′ सप्तमकोष्ठकात्पराख्यः − ३ घ० ९४ प० साधितः । अत्र भाज्यहरयोर्गतत्वात्पराख्य ऋणगतः ।

इदानीं तिथिनक्षत्रयोगाणां समाप्तिकालानयनं करणकालानयनं चोच्यते—

पराख्यैः स्ववारे पृथक्संस्कृते स्युः
पराशप्रपूर्णध्रुवाणां च कालाः ।
तिथिद्वंद्वकालैक्यखण्डं किल स्या-
त्परस्यास्तिथेराद्यखण्डस्य कालः ॥ १२ ॥

अन्वयः—पराख्यैः स्ववारे पृथक्संस्कृते पराशप्रपूर्णध्रुवाणां कालाः स्युः । तिथिद्वंद्वकालैक्यखण्डं किल परस्यास्तिथेराद्यखण्डस्य कालः स्यात् ॥ १२ ॥

विवरणम्—यस्मिन्वारादिमध्यमकाले तिथिनक्षत्रयोगत्रयस्य, मध्यमध्रुवाः, स्पष्टध्रुवाः, भाज्यहरद्वंद्वानि, पराख्याश्चाऽऽनीयन्ते स तेषां वारः । तं वारं सावयवं स्थानत्रये विलिख्य, एकत्र तिथिपराख्येण, अन्यत्र नक्षत्रपराख्येण, अपरत्र योगपराख्येण च युतश्चेत्तिथिनक्षत्रयोगाणां समाप्तिकाला भवन्ति । अत्र पराख्येण वारे संस्कृते यः कालः प्रजायते स कीदृशस्य पूर्णध्रुवस्य, गतस्योत गम्यस्येति चेत् । अत्रोच्यते—पराशप्रपूर्णध्रुवाणामिति । पराख्यस्य यादृशं चिह्नं स्यात्तादृशपूर्णध्रुवस्य काल इति ज्ञेयम् । पराख्यस्यर्णत्वे गतपूर्णध्रुवस्य कालो भवति । धनत्वे भोग्यपूर्णध्रुवस्य कालो भवति । गतत्वमृणरूपं, भोग्यत्वं धनरूपमिति ज्ञेयम् । प्रपूर्णाश्च ये ध्रुवास्ते प्रपूर्णध्रुवाः, परस्याऽऽशेवाऽऽशा येषां ते पराशाः, पराशाश्च ते प्रपूर्णध्रुवाश्च पराशप्रपूर्णध्रुवाः, तेषां पराशप्रपूर्णध्रुवाणामिति समासः । अत्राऽऽशा नाम चिह्नम्, परो नाम पराख्यः, पूर्णो नाम निरवयवः, इति ज्ञेयम् ।

अथ करणकालानयनम्—अत्र करणं तिथिदलपरम् । तिथेर्यः समाप्तिकालः स एव तस्या उत्तरार्धस्यापि भवति । अत एव तिथेः पूर्वार्धस्य समाप्तिकालज्ञानार्थमेव गणितमवशिष्यम् । तदर्थमुच्यते—तिथिद्वंद्वेति । क्रमशः स्थितानां तिथीनां द्वयोर्द्वयोः काल्योरैक्यं कृत्वा तदर्धितं चेदुत्तरतिथेः पूर्वार्धसमाप्तिकालो भवति । एवं

सर्वासां तिथीनां पूर्वार्धसमापनकालानानयेत् । कोष्ठके ९, सर्वेषां नक्षत्रयोगकरणानां नामानि पठितानि तानि तिथिपत्रके यथाक्रमं यथासम्भवंच निर्दिशेत् ।

उदाहरणम्—पञ्चमन्यासे लिखिता ये वारास्ते तृतीयन्यासस्य तृतीयगृहादुद्धृताः । तेषामग्रिमे पकाराङ्किते लघुगृहे चतुर्थन्यासे सिद्धांस्तिथिस्पष्टध्रुवान्विगतकलान्विलिख्य महागृहे चतुर्थन्याससिद्धभाज्यहरद्वंद्वेन सप्तमकोष्ठकलब्धास्तिथिपराख्याः प्रदर्शिताः । एवं फबकाराङ्कितयोर्गृहयोर्नक्षत्रयोगयोः पूर्णस्पष्टध्रुवाः पराख्याश्च लिखिताः । अत्रोदाहरणार्थं चैत्रशुक्लप्रतिपदि तिथ्यादिकानां स्पष्टकालानधः प्रसाधयामः । तृतीयन्यासे चैत्रशुक्लद्वितीयाया मध्यमाया अवसानसमयः—वा० १ ३७ ७, अस्मिन्काले चतुर्थन्यासे स्पष्टरविचन्द्राभ्यां सिद्धा स्पष्टतिथिः १ ४९९′ । अतोऽयमेव चैत्रशुक्लस्पष्टप्रतिपदो वारः । अयं त्रिः संस्थाप्य स्वस्वपराख्यैः संस्कृत्य—

| ति० १ | ति० | | | स्प० | न० | | | स्प० | यो० | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| | वा० | घ० | प० | न० | वा० | घ० | प० | यो० | वा० | घ० | प० |
| | १ | ३७ | ७ | २७ | १ | ३७ | ७ | २५ | १ | ३७ | ७ |
| | — | ३४ | ४४ | | — | २ | ५८ | | — | ३२ | १० |
| प्र० | र. १ | २ | २३ | रे० | र.१ | ३४ | ९ | प्र० | र.१ | ४ | ५७ |

अनिनास्तिथ्यादित्रयाणामवसानकालाः ।

अथ लुप्ततिथ्यादित्रयाणां कालानयनम् । तच्च लुप्तात्पूर्वध्रुवस्य धनपराख्येण वारे संस्कृते सिध्यति । चतुर्थन्यासे पञ्चम्या लोपोऽस्ति, अत एव चतुर्थी पूर्वतिथिः । अस्या वारः ४ ३४ १८ स्वकीयेन पञ्चमन्यासतलस्थेन धनपराख्येण +, १ घ० ७ प० युतो जातो लुप्तपञ्चम्या अवसानकालः वा० ४ ३९ २९ । अथ द्विरुपलब्धध्रुवस्य कालानयनम्—चतुर्थन्यासे स्पष्टषोडश्या द्विविधं मानं प्राप्तम् । अनयोः प्रथमस्य पराख्यं −३ घ० ५४ प० वारे १ २३ ५९ संयोज्य कालः—वा० १ २० ५ आनीतः ।

अथ करणकालानयनम्—अस्योदाहरणानि पञ्चमन्यासस्योत्तरार्धे बहूनि सन्ति । तानि दृष्टमात्राणि ज्ञायन्ते ।

इति पञ्चाङ्गगणितम् ।

---

# न्यासः २

## शके १८१५ प्रत्यमान्तं मध्यमध्रुवानयनम् ।

| अमान्तः | व.ति. | वारः | उप. १ | उप. २ | उप. ३ | मा. ति. | नक्षत्रम् | योगः |
|---|---|---|---|---|---|---|---|---|
| शके. | ति० | वा. घ. प. | ० | ० | ० | ति. क. | न. क. | यो. क. |
| १८१५ | ० | ६ ३८ ५९·५ | २५४·३८ | ११७·४२ | ३२४·९८ | २९ ६३·० | २४ ४६८·६ | २२ ५५४·३ |
| | ३० | १ ३१ ५०·१ | २९·११ | २५·८२ | ३०·६७ | ० ०·० | २ १४६·३ | ४ २९२·७ |
| चै० ३० | ३० | १ १० ४९·६ | २८३·४९ | १४३·२४ | ३५५·६५ | २९ ६३·० | २६ ६१४·९ | ० ८७·० |
| | ३० | १ ३१ ५०·१ | २९·११ | २५·८२ | ३०·६७ | ० ०·० | २ १४६·३ | ४ २९२·७ |
| वै० ३० | ६० | २ ४२ ३९·७ | ३१२·६० | १६९·०७ | २६·३२ | २९ ६३·० | १ ७६१·२ | ४ ३७९·७ |
| | ३० | १ ३१ ५०·१ | २९·११ | २५·८२ | ३०·६७ | ० ०·० | २ १४६·३ | ४ २९२·७ |
| ज्ये० ३० | ९० | ४ १४ २९·८ | ३४१·७१ | १९४·८८ | ५६·९८ | २९ ६३·० | ४ १०७·५ | ८ ६७२·४ |
| | ३० | १ ३१ ५०·१ | २९·११ | २५·८२ | ३०·६७ | · ०·० | २ १४६·३ | ४ २९२·७ |
| आ० ३० | १२० | ५ ४६ १९·९ | १०·८२ | २२०·७० | ८७·६५ | २९ ६३·० | ६ २५३·८ | १३ १६५·१ |
| | ३० | १ ३१ ५०·१ | २९·११ | २५·८२ | ३०·६७ | · · | २ १४६·३ | ४ २९२·७ |
| श्रा० ३० | १५० | ० १८ १०·० | ३९·९३ | २४६·५२ | ११८·३२ | २९ ६३·० | ८ ४००·१ | १७ ४५७·८ |
| | ३० | १ ३१ ५०·१ | २९·११ | २५·८२ | ३०·६७ | · · | २ १४६·३ | ४ २९२·७ |
| अ० ३० | १८० | १ ५० ०·१ | ६९·०४ | २७२·३४ | १४८·९९ | २९ ६३·० | १० ५४६·४ | २१ ७५०·५ |
| | ३० | १ ३१ ५०·१ | २९·११ | २५·८२ | ३०·६७ | · · | २ १४६·३ | ४ २९२·७ |
| भा० ३० | २१० | ३ २१ ५०·२ | ९८·१५ | २९८·१६ | १७९·६६ | २९ ६३·० | १२ ६९२·७ | २६ २४३·२ |
| | ३० | १ ३१ ५०·१ | २९·११ | २५·८२ | ३०·६७ | · · | २ १४६·३ | ४ २९२·७ |
| आ० ३० | २४० | ४ ५३ ४०·३ | १२७·२६ | ३२३·९८ | २१०·३३ | २९ ६३·० | १५ ३९·० | ३ ५३५·५ |
| | ३० | १ ३१ ५०·१ | २९·११ | २५·८२ | ३०·६७ | · · | २ १४६·३ | ४ २९२·७ |
| का० ३० | २७० | ६ २५ ३०·४ | १५६·३७ | ३४९·८० | २४१·०० | २९ ६३·० | १७ १८५ ३ | ८ २८·६ |
| | ३० | १ ३१ ५०·१ | २९·११ | २५·८२ | ३०·६७ | · · | २ १४६·३ | ४ २९२·७ |
| मा० ३० | ३०० | ० ५७ २०·५ | १८५·४८ | १५·६२ | २७१·६७ | २९ ६३·० | १९ ३३१·६ | १२ ३२१·३ |
| | ३० | १ ३१ ५०·१ | २९·११ | २५·८२ | ३०·६७ | · · | २ १४६·३ | ४ २९२·७ |
| पौ० ३० | ३३० | २ २९ १०·६ | २१४·५९ | ४१·४४ | ३०२·३४ | २९ ६३·० | २१ ४७७·९ | १६ ६१४·० |
| | ३० | १ ३१ ५०·१ | २९·११ | २५·८२ | ३०·६७ | · · | २ १४६·३ | ४ २९२·७ |
| मा० ३० | ३६० | ४ १ ०·७ | २४३·७० | ६७·२६ | ३३३·०१ | २९ ६३·० | २३ ६२४·२ | २१ १०६·७ |
| | ३० | १ ३१ ५०·१ | २९·११ | २५·८२ | ३०·६७ | · · | २ १४६·३ | ४ २९२·७ |
| फा० ३० | ३९० | ५ ३२ ५०·८ | २७२·८१ | ९३·०८ | ३·६८ | २९ ६३·० | २५ ७७०·५ | २५ ३९९·४ |

उपरितनगणितस्य शुद्धिपरीक्षा ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १८१५ | ० | ६ ३८ ५९·५ | २५४·३८ | ११७·४२ | ३२४·९८ | २९ ६३·० | २४ ४६८·६ | २२ ५५४·३ |
| | ३०० | १ १८ २१·२ | २९१·०६ | २५८·१७ | ३०६·७० | · · | २१ ६६३·४ | १६ ५२६·७ |
| · | ९० | ४ ३५ ३०·३ | ८७·३२ | ७७·४५ | ९२·०१ | · · | ६ ४३९·० | १३ ७८·० |
| फा. ३० | ३९० | ५ ३२ ५१·० | २७२·७६ | ९३·०८ | ३·६९ | २९ ६३·० | २५ ७७१·० | २५ ३९९·० |

# न्यासः ३

## शके १८१९ चैत्रमासे प्रतितिथि मध्यमध्रुवानयनम् ।

| म. तिथि. | ति. | वारः | उ. १ | उ. २ | उ. ३ | तिथिः(क) | नक्ष.(ख) | योगः(ग) |
|---|---|---|---|---|---|---|---|---|
| शके | ति | वा. घ. प. | ° | ° | ° | ति. क. | न. क. | यो. क. |
| १८१५ | ० | ६ ३८ ५९·५ | २५४·३८ | ११७·४२ | ३२४·९८ | २९ ६३·० | २४ ४६८·६ | २२ ५९४·३ |
| | १ | ० ५९ ३·७ | ०·९७ | ०·८६ | १३·०२ | १ ०·० | ७७८·२ | १ ३६·४ |
| चै. शु. १ | १ | ० ३८ ३·२ | २५५·३५ | ११८·२८ | ३३८·०० | ० ६३·० | २५ ४४६·८ | २३ ६३०·७ |
| | १ | ० ५९ ३·७ | ०·९७ | ०·८६ | १३·०२ | १ ०·३ | ७७८·२ | १ ३६·४ |
| चै. शु. २ | २ | १ ३७ ६·९ | २५६·३२ | ११९·१४ | ३५१·०२ | १ ६३·० | २६ ४२५·० | २४ ६६७·१ |
| | १ | ० ५९ ३·७ | ०·९७ | ०·८६ | १३·०२ | १ ०·० | ७७८·२ | १ ३६·४ |
| चै. शु. ३ | ३ | २ ३६ १०·६ | २५७·२९ | १२०·०० | ४·०४ | २ ६३·० | ० ४०३·२ | २५ ७०३·५ |
| चै. शु. ४ | ४ | ३ ३५ १४·३ | २५८·२६ | १२०·८६ | १७·०६ | ३ ६३·० | १ ३८१·४ | २६ ७३९·९ |
| ,, ५ | ५ | ४ ३४ १८·० | २५९·२३ | १२१·७२ | ३०·०८ | ४ ६३·० | २ ३५९·६ | ० ७७६·३ |
| ,, ६ | ६ | ५ ३३ २१·७ | २६०·२० | १२२·५८ | ४३·१० | ५ ६३·० | ३ ३३७·८ | २ १२·७ |
| ,, ७ | ७ | ६ ३२ २५·४ | २६१·१७ | १२३·४४ | ५६·१२ | ६ ६३·० | ४ ३१६·० | ३ ४९·१ |
| ,, ८ | ८ | ० ३१ २९·१ | २६२·१४ | १२४·३० | ६९·१४ | ७ ६३·० | ५ २९४·२ | ४ ८५·५ |
| ,, ९ | ९ | १ ३० ३२·८ | २६३·११ | १२५·१६ | ८२·१६ | ८ ६३·० | ६ २७२·४ | ५ १२१·९ |
| ,, १० | १० | २ २९ ३६·५ | २६४·०८ | १२६·०२ | ९५·१८ | ९ ६३·० | ७ २५०·६ | ६ १५८·३ |
| ,, ११ | ११ | ३ २८ ४०·२ | २६५·०५ | १२६·८८ | १०८·२० | १० ६३·० | ८ २२८·८ | ७ १९४·७ |
| ,, १२ | १२ | ४ २७ ४३·९ | २६६·०२ | १२७·७४ | १२१·२२ | ११ ६३·० | ९ २०७·० | ८ २३१·१ |
| ,, १३ | १३ | ५ २६ ४७·६ | २६६·९९ | १२८·६० | १३४·२४ | १२ ६३·० | १० १८५·२ | ९ २६७·५ |
| ,, १४ | १४ | ६ २५ ५१·३ | २६७·९६ | १२९·४६ | १४७·२६ | १३ ६३·० | ११ १६३·४ | १० ३०३·९ |
| ,, १५ | १५ | ० २४ ५५·० | २६८·९३ | १३०·३२ | १६०·२८ | १४ ६३·० | १२ १४१·६ | ११ ३४०·३ |
| चै व. १ | १६ | १ २३ ५८·७ | २६९·८९ | १३१·१८ | १७३·३० | १५ ६३·० | १३ ११९·८ | १२ ३७६·७ |
| २ | १७ | २ २३ २·४ | २७०·८६ | १३२·०२ | १८६·३२ | १६ ६३·० | १४ ९८·० | १३ ४१३·१ |
| ३ | १८ | ३ २२ ६·१ | २७१·८३ | १३२·९० | १९९·३४ | १७ ६३·० | १५ ७६·२ | १४ ४४९·५ |
| ४ | १९ | ४ २१ ९·८ | २७२·८० | १३३·७६ | २१२·३६ | १८ ६३·० | १६ ५४·४ | १५ ४८५·९ |
| ५ | २० | ५ २० १३·५ | २७३·७७ | १३४·६२ | २२५·३८ | १९ ६३·० | १७ ३२·६ | १६ ५२२·३ |
| ६ | २१ | ६ १९ १७·२ | २७४·७४ | १३५·४८ | २३८·४० | २० ६३·० | १८ १०·८ | १७ ५५८·७ |
| ७ | २२ | ० १८ २०·९ | २७५·७१ | १३६·३४ | २५१·४२ | २१ ६३·० | १८ ७८९·० | १८ ५९५·१ |
| ८ | २३ | १ १७ २४·६ | २७६·६८ | १३७·२० | २६४·४४ | २२ ६३·० | १९ ७६७·२ | १९ ६३१·५ |
| ९ | २४ | २ १६ २८·३ | २७७·६५ | १३८·०६ | २७७·४६ | २३ ६३·० | २० ७४५·४ | २० ६६७·९ |
| १० | २५ | ३ १५ ३२·० | २७८·६२ | १३८·९२ | २९०·४८ | २४ ६३·० | २१ ७२३·६ | २१ ७०४·३ |
| ११ | २६ | ४ १४ ३५·७ | २७९·५९ | १३९·७८ | ३०३·५० | २५ ६३·० | २२ ७०१·८ | २२ ७४०·७ |
| १२ | २७ | ५ १३ ३९·४ | २८०·५६ | १४०·६४ | ३१६·५२ | २६ ६३·० | २३ ६८०·० | २३ ७७७·१ |
| १३ | २८ | ६ १२ ४३·१ | २८१·५३ | १४१·५० | ३२९·५४ | २७ ६३·० | २४ ६५८·२ | २५ १३·५ |
| १४ | २९ | ० ११ ४६·८ | २८२·५० | १४२·३६ | ३४२·५६ | २८ ६३·० | २५ ६३६·४ | २६ ४९·९ |
| ३० | ३० | १ १० ५०·५ | २८३·४७ | १४३·२२ | ३५५·५८ | २९ ६३·० | २६ ६१४·६ | २७ ८६·३ |

# न्यासः ४

## शके १८१५ चैत्रमासे प्रतितिथि स्पष्टध्रुवानयनम् ।

| मध्यममासतिथि | तिथ्यादित्रयाणां संस्काराः | | | | | मध्यमतिथ्यन्तकाल तिथ्यादित्रयाणां स्फुटध्रुवा (भोग) | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | कोष्टक ४ उप १ | | | को ५ उप २ | को ६ उप ३ | स्पष्टा तिथि (क+अ+ए+ओ) | | | स्पष्ट नक्षत्रम् (ख+इ+ए+ओ) | | | स्पष्टो योग (गै+उ+ए+ओ) | | |
| | तिथ | नक्षत्रस्य | योगस्य | क्षयाणाम् | नयाणाम् | पूर्णतिथि | भागा | हारा | न | भागा | हारा | यो | भागा | हारा |
| | अ | इ | उ | ए | आ | ति | | | न | | | यो | | |
| ० | २८ | ३९ | २५५ | २२३ | १३ | २९ | ३२७ | ७८५ | २४ | ७४४ | ८४४ | २३ | २८१ | ९०३ |
| १ | २७ | ३९ | २५१ | २९० | १२ | ३० | ३९२ | ७५७ | २५ | ७८८ | ८५५ | २४ | ३८४ | ९१४ |
| २ | २७ | ३९ | २५२ | ३७० | ९ | १ | ४६९ | ८०१ | २७ | ४३ | ८६० | २५ | ४९८ | ९१८ |
| ३ | २६ | ३९ | २५२ | ४५५ | ६ | २ | ५५० | ८०० | १ | १०३ | ८५८ | २६ | ६१६ | ९१८ |
| ४ | २६ | ३९ | २५३ | ५३८ | ३ | ३ | ६३० | ७५५ | २ | १६१ | ८५५ | २७ | ७३४ | ९१२ |
| ५ | २५ | ३९ | २५३ | ६१६ | १ | ४ | ७०५ | ७८७ | ३ | २१६ | ८४५ | २ | ४६ | ९०४ |
| ६ | २५ | ३९ | २५३ | ६८४ | ० | ६ | ५२ | ७७७ | ४ | २६१ | ८३५ | ३ | १५० | ८९३ |
| ७ | २५ | ३९ | २५३ | ७४० | १ | ७ | १०९ | ७६१ | ५ | २९६ | ८२२ | ४ | २४३ | ८८१ |
| ८ | २४ | ३९ | २५४ | ७८३ | २ | ८ | १५२ | ७५२ | ६ | ३१८ | ८१० | ५ | ३२४ | ८६९ |
| ९ | २४ | ३९ | २५४ | ८१२ | ५ | ९ | १८४ | ७३८ | ७ | ३२८ | ७९७ | ६ | ३९३ | ८५४ |
| १० | २४ | ३९ | २५४ | ८२७ | ८ | १० | २०२ | ७२६ | ८ | ३२५ | ७८४ | ७ | ४४७ | ८४३ |
| ११ | २४ | ३९ | २५४ | ८३० | ११ | ११ | २०८ | ७१२ | ९ | ३०९ | ७७० | ८ | ४९० | ८२८ |
| १२ | २४ | ३९ | २५४ | ८२० | १३ | १२ | २०० | ७०० | १० | २७९ | ७५८ | ९ | ५१८ | ८१६ |
| १३ | २४ | ३९ | २५४ | ७९९ | १४ | १३ | १८० | ६८७ | ११ | २३७ | ७४५ | १० | ५३४ | ८०४ |
| १४ | २४ | ३९ | २५४ | ७६७ | १३ | १४ | १४७ | ६७४ | १२ | १८२ | ७३३ | ११ | ५३८ | ७९० |
| १५ | २४ | ३९ | २५४ | ७२३ | ११ | १५ | १०१ | ६६३ | १३ | ११५ | ७२१ | १२ | ५२८ | ७८० |
| १६ | २४ | ३९ | २५४ | ६६८ | ९ | १६ | ४४ | ६५३ | १४ | ३६ | ७७१ | १३ | ५०८ | ७६९ |
| १७ | २४ | ३९ | २५४ | ६०४ | ६ | १६ | ६९७ | ६४५ | १४ | ७४७ | ७०३ | १४ | ४७७ | ७६१ |
| १८ | २४ | ३९ | २५४ | ५३२ | ३ | १७ | ६२२ | ६४० | १५ | ६५० | ६९८ | १५ | ४३८ | ७५७ |
| १९ | २४ | ३९ | २५४ | ४५४ | १ | १८ | ५४२ | ६४० | १६ | ५४८ | ६९९ | १६ | ३९० | ७५६ |
| २० | २४ | ३९ | २५४ | ३७५ | ० | १९ | ४६२ | ६४२ | १७ | ४४७ | ७०० | १७ | ३५१ | ७५९ |
| २१ | २४ | ३९ | २५४ | २९६ | १ | २० | ३८८ | ६५० | १८ | ३४७ | ७०७ | १८ | ३१० | ७६५ |
| २२ | २५ | ३९ | २५४ | २२३ | ३ | २१ | ३१४ | ६५९ | १९ | २५४ | ७१७ | १९ | २६५ | ७७४ |
| २३ | २५ | ३९ | २५१ | १५९ | ६ | २२ | २६३ | ६७५ | २० | १६१ | ७२३ | २० | २४९ | ७९२ |
| २४ | २५ | ३९ | २५३ | १११ | ९ | २३ | २०८ | ६९५ | २१ | १०८ | ७४३ | २१ | २४१ | ८१० |
| २५ | २६ | ३९ | २५३ | ८३ | ११ | २४ | १८३ | ७१६ | २२ | ६७ | ७७४ | २२ | २५१ | ८३३ |
| २६ | २६ | ३९ | २५३ | ७७ | १३ | २५ | १७९ | ७४३ | २३ | ३१ | ८०१ | २३ | २८४ | ८५८ |
| २७ | २६ | ३९ | २५२ | ९९ | १४ | २६ | २०८ | ७६६ | २४ | ३२ | ८२३ | २४ | ३४२ | ८८१ |
| २८ | २७ | ३९ | २५२ | १४५ | १३ | २७ | २४८ | ७९१ | २५ | [illegible] | ८४९ | २५ | ४२३ | ९०७ |
| २९ | २७ | ३९ | २५१ | २३८ | ११ | २८ | ३६० | ८०८ | २६ | १०४ | ८६५ | २६ | ५३० | ९२४ |
| ३० | २७ | ३९ | २५१ | ३०९ | ८ | २९ | ४०७ | | २७ | १६७ | | २७ | ६५४ | |
| | | | | | | ४ | ७०० / ३० | ७८७ | | | | २७ | ७३४ / ६६ | ९१२ |

## तिथ्यादित्रयाणा पराप्यसिद्धिः स्पष्टपूर्णतिथीना समाप्तिकालश्च ।
### शके १८१९ चैत्रमासे

| मध्यमतिथि | मध्यमतिथे समाप्तिकाल व | पूर्णतिथि | तिथि पराप्य प | पूर्णनक्षत्र | नक्षत्र पराप्य फ | पूर्णयोग | योग पराप्य व | स्प० पू० तिथि | स्पष्टपूर्णतिथे समाप्तिकाल व+प |
|---|---|---|---|---|---|---|---|---|---|
| | वा घ प | | घ प | | घ प | | घ प | | वा घ प |
| ० | ६ ३८ ५९ | २९ | | २४ | | २३ | | | |
| १ | ० ३८ ३ | ३० | −२९ ४६ | २५ | ५७ ३९ | २४ | −२५ १८ | ३० | श ० ८ १७ |
| २ | १ ३७ ७ | १ | ३४ ४४ | २७ | २ ५८ | २५ | ३२ १० | १ | र १ २ २३ |
| ३ | २ ३६ ११ | २ | ४० ३३ | १ | ७ ४ | २६ | ३९ ३८ | २ | र १ ५५ ३८ |
| ४ | ३ ३५ १४ | ३ | ४६ ३१ | २ | ११ ५ | २७ | ४७ १३ | ३ | च २ ४८ ४३ |
| ५ | ४ ३४ १८ | ४ | ५२ २२ | ३ | १४ ५५ | २ | २ ५८ | ४ | म ३ ४१ २६ |
| ६ | ५ ३३ २२ | ६ | ३ ५४ | ४ | १८ १४ | ३ | ९ ४८ | ६ | गु ५ २९ २८ |
| ७ | ६ ३२ २५ | ७ | ८ २७ | ५ | २० ५६ | ४ | १६ ४ | ७ | शु ६ २३ ५८ |
| ८ | ० ३१ २९ | ८ | ११ ४५ | ६ | २२ ५९ | ५ | २१ ४३ | ८ | श ० १९ ४४ |
| ९ | १ ३० ३३ | ९ | १४ २७ | ७ | २३ ५५ | ६ | २६ ४२ | ९ | र १ १६ ६ |
| १० | २ २९ ३६ | १० | १६ ११ | ८ | २४ ५ | ७ | ३० ५५ | १० | च २ १३ २५ |
| ११ | ३ २८ ४० | ११ | १६ ५५ | ९ | २३ १७ | ८ | ३४ २० | ११ | म ३ ११ ४५ |
| १२ | ४ २७ ४४ | १२ | १६ ३५ | १० | २१ २३ | ९ | ३६ ५७ | १२ | बु ४ ११ ९ |
| १३ | ५ २६ ४८ | १३ | १५ ११ | ११ | १८ २८ | १० | ३८ ३९ | १३ | गु ५ ११ ३७ |
| १४ | ६ २५ ५१ | १४ | १२ ३८ | १२ | १४ २६ | ११ | ३९ ३१ | १४ | शु ६ १३ १३ |
| १५ | ० २४ ५५ | १५ | − ८ ५० | १३ | ९ १५ | १२ | −३९ २९ | १५ | श ० १६ ७ |
| १६ | १ २३ ५९ | १६ | − ३ ५४ | १४ | − २ ५६ | १३ | −३८ २७ | १६ | र १ २० ५ |
| १७ | २ २३ २ | * | * * | * | * * | १४ | ३६ ३५ | * | * * * |
| १८ | ३ २२ ६ | १७ | ५६ ५८ | १५ | ५४ ३६ | १५ | ३३ ५७ | १७ | च २ २५ ८ |
| १९ | ४ २१ १० | *१८ | ५० ० | १६ | ४६ २२ | १६ | ३० ४९ | १८ | म ३ ३१ १० |
| २० | ५ २० १३ | १९ | ४२ ३८ | १७ | ३७ ४६ | १७ | २७ २६ | १९ | बु ४ ३७ ३५ |
| २१ | ६ १९ १७ | २० | ३५ १९ | १८ | २९ १७ | १८ | २४ १ | २० | गु ५ ४३ ५८ |
| २२ | ० १८ २१ | २१ | २८ ३२ | १९ | २१ १२ | १९ | २१ १४ | २१ | शु ६ ४९ ४९ |
| २३ | १ १७ २५ | २२ | २२ ४० | २० | १४ ४ | २० | १९ ० | २२ | श ० ५४ ४५ |
| २४ | २ १६ २८ | २३ | १८ १२ | २१ | ८ ३३ | २१ | १७ ५८ | २३ | र १ ५८ १६ |
| २५ | ३ १५ ३२ | २४ | १५ ३२ | २२ | ४ २८ | २२ | १८ १८ | २४ | च २ ६० ० |
| २६ | ४ १४ ३६ | २५ | १४ ४६ | २३ | २ २७ | २३ | २० ८ | २५ | म ३ ६० ० |
| २७ | ५ १३ ३९ | २६ | १६ ३ | २४ | २ २१ | २४ | २३ ३२ | २६ | बु ४ ५७ ३६ |
| २८ | ६ १२ ४३ | २७ | १९ ७ | २५ | ३ ५७ | २५ | २८ २७ | २७ | गु ५ ५३ ३६ |
| २९ | ० ११ ४७ | २८ | २३ ४९ | २६ | ७ १४ | २६ | ३४ २८ | २८ | शु ६ ४७ ५८ |
| ३० | १ १० ५० | २९ | −२९ ४५ | २७ | −११ ३८ | २७ | −४१ ४८ | २९ | श ० ४१ ५ |
| | | ४+ | १ ७ | | | २७+ | ४ १६ | ५ | शु ४ ३५ २५ |

# न्यासः ५ अवशिष्टः ।

## स्पष्टपूर्णानां नक्षत्रयोगकरणानां समाप्तिकालाः ।
## शके १८१९ चैत्रमासे

| मध्यमतिथि | स्प पू नक्षत्रम् | स्प पू नक्षत्रस्य समाप्तिकाल व + फ | | | स्प पू योग | स्प पू योगस्य समाप्तिकाल व + व | | | स्प तिथि | उत्तरकरणम् | करणकालगणितम् — तिथिकाल उत्तरकरणस्य | | तिथि द्वद्का ऐक्यम् म | | खण्डम् पूर्वकरणकाल १/२ म | | पूर्वकरणम् |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | | वा० | घ० | प० | | वा० | घ० | प० | | | वा | घ | वा | घ | वा | घ | |
| १ | २५ | ६ | ४२ | २७ | २४ | ० | १२ | ४५ | १ | २ | १ | २ | २ | ५८ | १ | २९ | ३ |
| २ | २७ | १ | ३४ | ९ | २५ | १ | ४ | ५७ | २ | ४ | १ | ५६ | ४ | ४५ | २ | २२ | ५ |
| ३ | १ | २ | २९ | ७ | २६ | १ | ५६ | ३३ | ३ | ६ | २ | ४९ | ६ | ३० | ३ | १५ | ७ |
| ४ | २ | ३ | २४ | ९ | २७ | २ | ४८ | १ | ४ | ८ | ३ | ४१ | ८ | १६ | ४ | ८ | ९ |
| ५ | ३ | ४ | १९ | ३३ | २ | ४ | ३१ | २० | ५ | १० | ४ | ३५ | १० | ४ | ५ | २ | ११ |
| ६ | ४ | ५ | १५ | ८ | ३ | ५ | २३ | ३४ | ६ | १२ | ५ | २९ | ११ | ५३ | ५ | ५६ | १३ |
| ७ | ५ | ६ | ११ | २९ | ४ | ६ | १६ | २१ | ७ | १४ | ६ | २४ | १३ | ४४ | ६ | ५२ | १५ |
| ८ | ६ | ० | ८ | ३८ | ५ | ० | ९ | ४६ | ८ | १६ | ० | २० | १ | ३६ | ० | ४८ | १७ |
| ९ | ७ | १ | ६ | ३८ | ६ | १ | ३ | ५१ | ९ | १८ | १ | १६ | ३ | २९ | १ | ४९ | १९ |
| १० | ८ | २ | ५ | ३१ | ७ | १ | ५८ | ४१ | १० | २० | २ | १३ | ५ | २५ | २ | ४२ | २१ |
| ११ | ९ | ३ | ५ | २३ | ८ | २ | ५४ | २० | ११ | २२ | ३ | १२ | ७ | २३ | ३ | ४१ | २३ |
| १२ | १० | ४ | ६ | २१ | ९ | ३ | ५० | ४७ | १२ | २४ | ४ | ११ | ९ | २३ | ४ | ४१ | २५ |
| १३ | ११ | ५ | ८ | २० | १० | ५ | ४८ | ९ | १३ | २६ | ५ | १२ | ११ | २५ | ५ | ४२ | २७ |
| १४ | १२ | ६ | ११ | २५ | ११ | ५ | ४६ | २० | १४ | २८ | ६ | १३ | १३ | २९ | ६ | ४४ | २९ |
| १५ | १३ | ० | १५ | ४० | १२ | ६ | ४५ | २६ | १५ | ३० | ० | १६ | | | | | |
| | | | | | | | | | | | | | १ | ३६ | ० | ४८ | ३१ |
| १६ | १४ | १ | २१ | ३ | १३ | ० | ४५ | ३२ | १६ | ३२ | १ | २० | ३ | ४५ | १ | ५२ | ३३ |
| १७ | * | * | * | * | १४ | १ | ४६ | २७ | १७ | ३४ | २ | २५ | ५ | ५६ | २ | ५८ | ३५ |
| १८ | १५ | २ | २७ | ३० | १५ | २ | ४८ | १ | १८ | ३६ | ३ | ३१ | ८ | ९ | ४ | ४ | ३७ |
| १९ | १६ | ३ | ३४ | ४८ | १६ | ३ | ५० | २१ | १९ | ३८ | ४ | ३८ | १० | २२ | ५ | ११ | ३९ |
| २० | १७ | ४ | ४२ | २७ | १७ | ४ | ५२ | ४७ | २० | ४० | ५ | ४४ | १२ | ३४ | ६ | १७ | ४१ |
| २१ | १८ | ५ | ५० | ० | १८ | ५ | ५५ | १० | २१ | ४२ | ६ | ५० | १४ | ४५ | ० | २२ | ४३ |
| २२ | १९ | ६ | ५७ | ९ | १९ | ६ | ५७ | ९ | २२ | ४४ | ० | ५५ | २ | ५४ | १ | २७ | ४५ |
| २३ | २० | १ | ३ | ८ | २० | ० | ५८ | २५ | २३ | ४६ | १ | ५९ | ४ | ५९ | २ | २९ | ४७ |
| २४ | २१ | २ | ८ | ६ | २१ | १ | ५८ | ३० | २४ | ४८ | २ | ६० | ७ | ० | ३ | ३० | ४९ |
| २५ | २२ | ३ | ११ | ४ | २२ | २ | ५७ | १४ | २५ | ५० | ३ | ६० | ८ | ५८ | ४ | २९ | ५१ |
| २६ | २३ | ४ | १२ | १४ | २३ | ३ | ५४ | २८ | २६ | ५२ | ४ | ५८ | १० | ५२ | ५ | २६ | ५३ |
| २७ | २४ | ५ | ११ | १८ | २४ | ४ | ५० | ७ | २७ | ५४ | ५ | ५४ | १२ | ४२ | ६ | २१ | ५५ |
| २८ | २५ | ६ | ८ | ४६ | २५ | ५ | ४४ | २१ | २८ | ५६ | ६ | ४८ | १४ | २९ | ० | १४ | ५७ |
| २९ | २६ | ० | ४ | ३३ | २६ | ६ | ३७ | ९ | २९ | ५८ | ० | ४१ | | | | | |
| ३० | २७ | ० | ५९ | १२ | २७ | ० | २९ | २ | ३० | ६० | | | | | | | |
| | | | | | १ | ३ | ३९ | ३० | | | | | | | | | |

## अथाभीष्टशकवर्षे विवक्षिततिथौ तिथिनक्षत्रयोगाणां कालानयनम् ।

अभीष्टा शरत्खाभ्रधृत्युन्मिताब्दात् १८००परा चेद्धनं पूर्विका चेदृणं स्यात् ।
गतिर्वर्षसंघप्रजातेति मत्वा प्रसाध्या अभीष्टाब्दशुद्धध्रुवाश्च ॥ १३ ॥
प्रयाताश्च चैत्रादयश्चान्द्रमासाः खरामा३०हताः शेषतिथ्योघयुक्ताः ।
तिथेरिष्टवर्षध्रुवेणोनिताः स्यात्तिथीनां गणस्तेन कोष्ठात्तृतीयात् ॥ १४ ॥
गृहीतप्रगत्या युताः पूर्वशुद्धध्रुवास्ते भवन्तीष्टतिथ्यन्तकाले ।
यथोक्तं त्रयाणां च संस्कारलिप्ताः समानीय ताभिर्युतास्ते स्फुटाः स्युः॥१५॥
तथा चाष्टमादोपधीशद्युभुक्तिस्तदग्रस्थितात्सूर्यभुक्तिः प्रसाध्या ।
तयोर्योगविश्लेषकौ योगतिथ्योर्हरौ चन्द्रभुक्तिस्तु नक्षत्रहारः ॥ १६ ॥
समीपेष्टपूर्णाच्युता बीजरीत्या ध्रुवाः षष्टिनिघ्नाः स्वहारेण भक्ताः ।
फलैर्वासरः संस्कृतश्चेद्घटीषु पृथक्पूर्तिकालाः स्युरिष्टध्रुवाणाम् ॥ १७ ॥

अन्वयः—अभीष्टा शरत्खाभ्रधृत्युन्मिताब्दात् १८०० परा चेद्वर्षसंघप्रजाता गतिर्धनम्, पूर्विका चेदृणम्, इति मत्वाऽभीष्टशकाब्दशुद्धध्रुवाः प्रसाध्याः ॥ १३ ॥ प्रयाताश्च चैत्रादयश्चान्द्रमासाः खरामाहताः शेषतिथ्योघयुक्ता इष्टवर्षस्य तिथेर्ध्रुवेण हीनाः ( सन्तः ) तिथीनां गणः स्यात्तेन तृतीयात्कोष्ठात् ॥ १४ ॥ गृहीतप्रगत्या युताः पूर्वशुद्धध्रुवाः ( चेत् ) त इष्टतिथ्यन्तकाले भवन्ति । यथोक्तं त्रयाणां संस्कारलिप्ताः समानीय ताभिर्युतास्ते ( इष्टतिथ्यन्तकालिका ध्रुवाः ) स्फुटाः स्युः ॥ १५ ॥
तथा च, अष्टमादोपधीशद्युभुक्तिस्तदग्रस्थितात्सूर्यभुक्तिश्च प्रसाध्या, तयोर्योगविश्लेषकौ ( क्रमात् ) योगतिथ्योर्हरौ ( स्यातां ) चन्द्रभुक्तिस्तु नक्षत्रहारः ( स्यात् ) ॥ १६ ॥ बीजरीत्या समीपेष्टपूर्णाच्च्युताः (स्पष्टाः)ध्रुवाः षष्टिनिघ्नाः स्वहारेण भक्ताः ( लब्धैः ) फलैर्वासरो घटीषु पृथक्संस्कृतश्चेत्समीपेष्टपूर्णध्रुवाणां पूर्तिकालाः स्युः ॥ १७ ॥

विवरणम्—इष्टशकवर्षमष्टादशशततमवर्षादधिकं चेद्वर्षगणजनितगतिर्धनम्, ऊनं चेदृणमिति मत्वा प्रागुक्तवदभीष्टशकवर्षस्य शुद्धध्रुवाः साध्याः ॥ १३ ॥ प्रयाताश्चेति । निजचैत्रमाससमारभ्येष्टमासपर्यन्तं यावन्तो मासा अतीतास्तावन्तस्त्रिंशद्गुणा इष्ट-

* तदग्रस्थितात्—नवमात् ।

मासस्यावशिष्टतिथिसंख्यया युता इष्टवर्षस्य ध्रुवेण च रहिताः सन्तो यच्छेषं स एव **तिथिगणः** स्यात् । तिथिगणो नाम मेषसंक्रमणसमीपस्थतिथितो विवक्षिततिथिपर्यन्तं तिथीनां संख्या। तिथिगणमुपकरणं प्रकल्प्य तेन तृतीयकोष्ठकात्पङ्क्तिरूपां गतिमादाय तां पूर्वानीतेष्विष्टशकवर्षीयशुद्धध्रुवेषु क्षिपेत् । संकलितानीष्टतिथ्यन्तकालिकाः शुद्धमध्यमध्रुवा भवन्ति । अनन्तरं पूर्वोक्तवत्त्रिभिरुपकरणैः क्रमाच्चतुर्थपञ्चमषष्ठकोष्ठकेभ्यस्तिथ्यादित्रयाणां संस्कारलिप्ताः समानीय ताभिरिष्टतिथ्यन्तकालिकशुद्धमध्यमध्रुवा यथाक्रमं युताश्चेत्त एव स्पष्टा भवन्ति ॥ १४ ॥ १५ ॥ अथ **हारानयनम्**—अष्टमकोष्ठकाच्चन्द्रदिनगतिं नवमकोष्ठकाच्च रविगतिं प्रसाध्य तयोर्गत्योर्योगान्तरे क्रमाद्योगतिथ्योर्हारौ भवतः । चन्द्रगतिरेव नक्षत्रहारो भवति ॥ १६ ॥ अथ **तिथ्यादित्रयाणामवसानकालानयनमुच्यते**—समीपष्टेति । पूर्वानीता ये सावयवस्पष्टध्रुवास्तान्समीपेभ्य इष्टपूर्णध्रुवेभ्यः 'संशोध्यमानं स्वमृणत्वमेति' इति बीजरीत्या संशोध्य ये शेषा लभ्यन्ते ते षष्टिगुणाः स्वस्वहारेण भक्ताः फलानि घटिकादिपराख्या. शेषचिह्ना भवन्ति । एतैः पराख्यैः पूर्वानीतो वासरः स्थानत्रये संस्कृतश्चेत्तिथ्यादित्रयाणामिष्टानां पूर्णध्रुवाणां समाप्तिकालाः सिध्यन्ति । अत्र नक्षत्रयोगयोः पूर्णध्रुवः सावयवध्रुवात्पूर्व उत्तरो वा, तथा ग्राह्यो यथा स इष्टतिथिवासरे पतेत् ॥ १७ ॥

उदाहरणम्—शालिवाहनशके त्रयोदशाधिकाष्टादशशततमे १८१३ वर्षे श्रावणकृष्णाष्टम्यां तिथिनक्षत्रयोगा मध्यमार्कोदयात्कियता कालेन समाप्तिमुपायन्निति प्रश्ने पठन्यासावसरः । अस्मिन्नुदाहरण इष्टशकवर्षम् १८१३, इदं गणितारम्भशकवर्षात् १८०० अधिकमस्ति । तस्मादत्राऽऽगतो वर्षगणः (१८१३–१८००=१३); तत्साधिता गतिश्च धनम् । प्रागुक्तवत्सर्वं विगणय्य लब्धा इष्टशकवर्षीयाः शुद्धमध्यमध्रुवाः—ति. २९ । वा. ३ ११ ०९२ । २७४° ८८ इत्यादयः । अथ इष्टतिथ्यन्तकालिकाः कार्याः । तत्राऽऽदौ तिथिगणः साध्यते । चैत्रादितः श्रावणमासपर्यन्तं गतमासाश्चत्वारः, परं मध्ये वैशाखोऽधिकोऽस्तीति द्वादशकोष्ठकस्योत्तरांशेऽज्ञायते । अतो गतमासाः पञ्च, ते त्रिंशद्गुणास्तिथयः१५०, कृष्णाष्टमीपर्यन्तं शेषतिथयः२३, आभिर्युताश्चेज्जाताश्चैत्रादेः श्रावणवद्यष्टमीसमाप्तिपर्यन्तं समस्ततिथिसंख्या.१७३ । अस्यां तिथिध्रुवेण २९ वर्जितायां जातस्तिथिगणः १४४ । तृतीयकोष्ठात् १००+४०+४ इति त्रिभिः खण्डैः पङ्क्तिरूपं गतित्रयमादाय तच्च पूर्वानीतेषु शुद्धमध्यमध्रुवेषु क्षिप्त्वा जनिताः श्रावणवद्यष्टम्यां मध्यमध्रुवाः ति. १७३ । वा. ९ ४० ४०·६ । ९४·९९ इत्या० ।

अथ स्पष्टीकरणम्—उपकरणशतांशेषु किंचित्प्रक्षिप्य, आदर्शार्थं शुद्धैस्त्रिभिरुपकरणैः ९४·६ । ३४०·९ । ११·२ चतुर्थपञ्चमषष्ठकोष्ठेभ्यः संस्कारानुद्धृत्य

## न्यासः ६

| शकः | व. ति. | वारः | प्र. उ. | द्वि. उ. | तृ. उ. | मा. ति. | नक्षत्रम् | योगः |
|---|---|---|---|---|---|---|---|---|
| | | वा. घ. प. | ° | ° | ° | ति. ' | न. ' | यो. ' |
| गु. १८०० | ६ | २ २३ ४९·० | २७५·७१ | २६·४४ | १२९·०७ | ५ ६३·० | ४ ४६५ ५ | ४ २६८·१ |
| गति. } १० | २० | ४ ५६ ५७ ८ | ३५९·३६ | ३१२·६९ | ७२ ९२ | २० ०·० | १७ ७६३·७ | १७ ७२७·३ |
| को.१ } ३ | ३ | २ ३५ ५ : | ३५९ ८१ | २३७ ८१ | ९३·८८ | ३ ०·० | २ ५४९·१ | २ ५३८·२ |
| १८१३ | २९ | ३ ५५ ५२·० | २७४·८८ | २१६·५४ | २५५ ८७ | २८ ६३ ० | २५ १७८·३ | २४ ७३३·६ |
| को.२काला | · | − ० ०·० | ०·०० | + ०·०१ | ०·०० | · | | |
| श. १८१३ | २९ | ३ ५५ ५२ ० | २७४ ८८ | २१६·५५ | २५५ ८७ | २८ ६३·० | २५ १७८·३ | २४ ७३३·६ |
| को. ३ { | १०० | ० २६ ७ १ | ९७ ०२ | ८६·०६ | २२२ २३ | १० ०·० | १६ २२१·१ | २३ ४४२·२ |
| | ४० | ४ २२ २६·८ | ३८·८१ | ३४ ४७ | १६०·८९ | १० ०·० | ११ ७२८ ४ | १४ ६५६·९ |
| | ४ | ३ ५६ १४ ७ | ३·८८ | ३·४४ | ५२·०९ | ४ ०·० | ३ ७१२·८ | ४ १४५·७ |
| गु श्रा व ८ | १७३ | ५ ४० ४०·६ | ५४ ५° | ३४०·८७ | ११·०८ | २२ ६३·० | ३ २४०·६ | १३ ३७८·४ |
| को. ४. प्रथममुपकरणम्...५४°·६ अनेन लब्धः सस्कार. ... | | | | | | २५२·० | ५९·७ | ६६·० |
| को. ५. द्वितीयमुपकरणम् ३४०·९ ,, ,, ...... | | | | | | ९३४·० | ९३४ ० | ९३४·० |
| को. ६. तृतीयमुपकरणम्... ११·१ ,, ,, ...... | | | | | | ४·० | ४·० | ४·० |
| श्रावणकृ. ८ म्यां स्पष्टध्रुवाः ...........................अ...... | | | | | | २२ ५३३·० | ४ ४३७ | १४ ५८२ |
| समीपेष्टपूर्णमानानि .................................इ...... | | | | | | २३ ०·० | ४ ० | १५ ० |
| समीपेष्टपूर्णमानेभ्यश्च्युता. स्पष्टध्रुवा ...भाज्यानि...(इ−अ) ... | | | | | | − ५३३ | − ४३७ | + २१८ |
| को. ८ उप द्वि.३४१° इष्टतिथिः२२।२३ गतगम्यभाज्ययो' चं ग | | | | | | ७९७ | ७९२ | ७७४ |
| को. ९.उप, प्र. ५५ ..........................रविगतिः... | | | | | | − ५८ | ० | + ५८ |
| हाराः ................................................ | | | | | | ७३९ | ७९२ | ८३२ |
| | | | | | | वा. घ प. | वा. घ. प. | वा. घ. प. |
| परार्धयाः = भाज्य × ६० − स्वहारः ................ | | | | | | − ४३ १८ | − ३३ ४ | + १५ ४३ |
| मध्यमातिथ्यन्ते वासरः ................................ | | | | | | ५ ४० ४१ | ५ ४० ४१ | ५ ४० ४१ |
| ति २३ न ४ यो. १५ एतेषा समाप्तिकालाः ........... | | | | | | ४ ५७ २३ | ५ ७ ३७ | ५ ५६ २४ |

तैः स्वस्वमध्यमध्रुवा युताः सन्तो जाता स्पष्टतिथिः २२ ९३३' नक्षत्रं ४ ४३७' योगः १४ ५८२' । एतानि निजनिजेभ्यः समीपस्थेभ्य इष्टपूर्णध्रुवेभ्यः ति. २३, न. ४, यो. १५, विशोध्य लब्धास्तिथिभाज्यकलाः ९३३' । अत्रेष्टपूर्णतिथिः २३ अस्याः स्पष्टतिथ्यपेक्षया २३ ९३३' अल्पतरत्वाद्धीनरीत्या विपरीतशोधने कृते

शेषकलाः ९३३′ ऋणम्। एवमपि नक्षत्रभाज्यकलानामृणत्वमुपलब्धम्। योगस्येष्टपूर्णध्रुवस्य १९ स्पष्टध्रुवात् १४ ९८२′ महत्तरत्वाच्छेषकलाः २१८′ अधिका जाताः। अत्र समीपेष्टमानेषु ति. २४, न. ९, यो. १४ कल्पितेषु तेषां समाप्तिकाला अपि सिध्येयुः।

अथ हारसाधनम्—तच्च चन्द्रसूर्ययोर्गतिभ्यां भवति। भाज्यस्यर्णत्वेऽष्टमकोष्ठकादेकोनया मासिकतिथ्या, एकोनेन द्वितीयोपकरणेन च चन्द्रगतिः साध्या, तयोः पूर्वदिनसंबन्धित्वात्। धनत्वे तूभाभ्यां वर्तमानाभ्यां चन्द्रगतिः साध्येति स्पष्टमेव। एवमृणभाज्ये सति द्वि·उ· ३४०° । मा· ति· २२ आभ्यामष्टमकोष्ठके पूर्वदिनचन्द्रगतिः ७९२′ लभ्यते। धनभाज्ये सति द्वि· उ· ३४१, मा· ति· २३ इति वर्तमानोपकरणाभ्यां ७७४′ चन्द्रगतिर्लभ्यते । न्याससिद्धेन प्रथमोपकरणेनैकयूनपूर्णेन ९९° अनेन नवमकोष्ठकाद्रविगतिः ५८′ कला लभ्यते। इयं पूर्वापरदिवसयोः समाना, रविगतिफलाल्पत्वात्। एवं सिद्धयोश्चन्द्रसूर्यगत्योरन्तरं ७३३′ तिथिहारः, ऐक्यं ७७४′ योगहारः, एकाकिनी चन्द्रगतिः ७९२′ नक्षत्रहारः, इति स्पष्टमेव।

अथ समाप्तिकालार्थं पराख्यगणितम्—तिथिभाज्यः – ९३३′ षष्ट्या गुणितः –३१९८०′ स्वहारेण भक्तो जातः पराख्यः –४३ घ. १८प., भाज्यस्यर्णत्वात्पराख्योऽप्यृणम्। अनेन मध्यमवासरे ९ ४० ४१ संस्कृते जातस्तिथ्यन्तो बुधवासरे मध्यमार्कस्योदयात् ५७ घ. २३ प.। एवं नक्षत्रयोगाणामपि कालानयनं ज्ञेयम्।

अथान्यदुदाहरणम्—शालिवाहनशके ४०६ तमे वर्षे आषाढशुक्ल १२ द्वादशी सुरगुरुवासरे बभूवेतीरणग्रामे* बुधगुप्तराज्ञः शिलालेखो विद्यते। तत्रेयं. तिथिर्गुरुवासरे पपात न वेत्यस्य निर्णयं कुरु। अत्रेष्टशके ४०६ अष्टादशशतैर्विपरीतं शोधिते जात ऋणगतो वर्षगणः –१३९४ अनेन साधितया गत्याऽप्यृणेन भवितव्यम्। अत्र सप्तमे न्यासे प्रथमं गणितारम्भध्रुवकान्विलिख्य तेषामधस्तिर्यग्रेखां कृत्वा तस्या अधः प्रथमकोष्ठकाद्वर्षगणस्य खण्डचतुष्केण गतिचतुष्कमादाय तस्मिन्नेकीकृते जाता +१३९४ वर्षाणां गतिः ति· + २९। वा. + ६ २४ ४३·८। प्र. उ. + ३९३° ६९ इत्या०। अस्यां गणितारम्भध्रुवेभ्योऽपनीतायां सत्यां शेषा इष्टवर्षस्य ४०६ ध्रुवाः। तिथिः ७। वा. २ ५९ ९·२ इत्या०। अत्र तिथिध्रुवः ७। अतोऽस्मिन्वर्षेऽधिमासो नास्तीति द्वादशकोष्ठस्य पूर्वार्धावलोकनाज्ज्ञायते।

अनन्तरं द्वितीयकोष्ठकात्—शके ४०६ वर्षस्य कालान्तरं गृहीत्वा तेन –२ घ० ४८ प० इत्यादिना वर्षध्रुवेषु संस्कृतेषु जाता इष्टवर्षे शुद्धमध्यमध्रुवाः वा० २ ५६ १७·२, इत्यादयः।

---

* ईरणग्रामे रेखान्तरं पूर्वं २° ३२′ अक्षांश. उ० २४° ५′।

अथ तिथिगणः साध्यः। इष्टवर्षेऽधिमासो नास्तीति चैत्रादित आषाढशुक्ल १२ पर्यन्तं तिथयः १०२। आभ्यस्तिथिध्रुवे ७ अपास्ते शेषं तिथिगणः ९५, अनेन तृतीयकोष्ठकाद्वार्तां गृहीत्वा लब्धा आषाढशुक्ल १२ श्यां ध्रुवाः— ति० १०२। वा० ५ २७ ५·८ इत्या०। शेषं परास्यपर्यन्तं सर्वं गणितं पूर्वोक्तवत्कृत्वा लब्धः स्पष्टतिथ्यन्तकालः— वा० ५ ५३ ४४ इति। अतः शकवर्षे ४०६ आषाढशुक्ल १२ द्वादशी सुरगुरुवासरे पपातेति सत्यम्।

## न्यासः ७

| शकवर्षाणि | ति. | वा. | घ. | प. | प्र. उप. | द्वि. उप. | तृ. उप. | मासतिथिः |
|---|---|---|---|---|---|---|---|---|
| ध्रुवाः (अ) १८०० | ६ | २ | २३ | ४९·० | २७५°·७१ | २६°·४४ | १२९°·०७ | ५ ६३'·० |
| को. १ { १००० | २२ | २ | ५८ | ०·८ | ३५६·४६ | २·३९ | १७९·३९ | २२ ०·० |
| ३०० | १८ | ५ | ११ | ५८·० | ३५८·३६ | ३६·२० | २६२·०० | १८ ०·० |
| ५० | ५ | ० | २७ | ५७·५ | ३५५·१२ | २९८·५२ | १·३९ | ५ ०·० |
| ४ | १४ | ४ | ४६ | ४७·१ | ३५५·७५ | १९७·०८ | २४५·१७ | १४ ०·० |
| (इ) १३५४ | २९ | ६ | २४ | ४३·८ | ३५३·६९ | १७४·१९ | ३२७·९५ | २९ ०·० |
| (अ–इ) ४०६ | ७ | २ | ५९ | ५·२ | २८२·०२ | २१२·२५ | १६१·१२ | ६ ६३·० |
| को. २ कालान्तर | • | — | २ | ४८·० | — ०·२१ | +१·७१ | — ०·३३ | ० ०·० |
| शुद्धमध्यमध्रुवाः | ७ | २ | ५६ | १७·२ | २८१·८१ | २१३·९६ | १६०·७९ | ६ ६३·० |
| | ९० | ४ | ३५ | ३०·३ | ८७·३२ | ७७·४५ | ९२·०१ | ० ०·० |
| | ५ | ४ | ५५ | १८·३ | ४·८५ | ४·३० | ६५·११ | ५ ०·० |
| आषाढशुक्ल १२ | १०२ | ५ | २७ | ५·८ | १३·९८ | २९५·५१ | ३१७·९१ | ११ ६३·० |
| | | | | | उप.को.४ | उ.को.५ | उ.को.६ | ३२८·० |
| संस्काराः ........ | | ... | ... | ... | ...१८२' + | १३२' + | १४' = | |
| स्पष्टतिथिध्रुवः ........ | | ... | ... | ... | ... ... | ... ... | ... ... | ११ ३५१·० |
| दिनगतिः ........ | | ... | ... | ... | सू. ५७'; | च ७९६'; | अन्तर ७३९' | |
| परास्यः ........ | | + | २६ | ३८·० | =(३२९'×६०घ.—७३९'); | | | भो.० ३२९·० |
| स्पष्टतिथ्यन्तः ........ | | ५ | ५३ | ४३·८ | | | स्पष्टतिथिः | १२ ०·० |

इत्यभीष्टतिथिप्रकरणम्।

## अथ संक्रमणमहानक्षत्रायनविपुत्राणां कालानयनम् ।

वस्तुतः प्रत्यब्दं तात्कालिकस्पष्टसूर्यादेव संक्रमणादिकानां कालानयनमुचितम् । परं तु सूर्यस्योच्चस्य परमफलस्य चाल्पगतित्वात्तेषां सकृत्साधिताः काला वर्षगत्या चालयितुं शक्यन्ते । तथाऽपि महता कालेन महदन्तरं मा भूदिति मयाऽत्र वारविकार उत्पादितः । अनेन संस्कृता वर्षगतिचालितकाला अतीतागामिषु वर्षसहस्रेष्वपि निरन्तराः स्युः ।

इदानीं संक्रमणसूर्यर्क्षकालानयनम्—

> अब्दपशुद्धी दशमादानीयाभीष्टवर्षजौ च तयोः ॥
> एकादशपदकस्थान्संक्रमसूर्यर्क्षभेदकान्युक्त्वा ॥ १७ ॥
> वर्षचयघ्नविकारान्वारे प्रक्षिप्य लब्धकाले स्युः ॥
> लब्धतिथीनां निकटे तत्तत्सूर्यर्क्षसंक्रमारम्भाः ॥ १८ ॥

प्रथमं वर्षगणेन दशमकोष्ठकादभीष्टशकवर्षीयावब्दपस्तिथिशुद्धिश्च साध्यौ । अनन्तरं यावन्ति संक्रमसूर्यनक्षत्राणि तावत्कृत्वस्तौ पङ्क्तौ पृथक्पृथग्विलिख्य तेषामध एकादशकोष्ठकस्थान्संक्रमणानां सूर्यनक्षत्राणां च भेदान्न्यसेत् । तदध एकादशकोष्ठकस्थान्वारविकारान्वर्षगणेन संगुण्य लब्धानि पलानि स्वस्वस्थानेषु पङ्क्तौ लिखेत् । एवं पङ्क्तित्रयस्यैक्ये कृते लब्धतिथीनां निकटे लब्धवारादिकालेषु पृथक्पृथक्संक्रमणानां महानक्षत्राणां चाऽऽरम्भाः स्युः ।

उदाहरणम्—शके १८१९ वर्षीयाणां केषांचित्संक्रमणमहानक्षत्राणां प्रारम्भकाला आनीयन्ते । अत्र साहचर्यादयनांशानपि साधयामः । तेषां प्रयोजनमग्रे रविक्रान्तिगणिते ।

अब्दपतिथिशुद्ध्यानयनार्थं न्यासः ।

| विवरणम् | शकः | अब्दपः | | | ति. शु. | अयनांशाः | | |
|---|---|---|---|---|---|---|---|---|
| | व. | वा. | घ. | प | ति. | ° | ′ | ″ |
| को. १० ध्रुवाः | १८०० | २ | ७ | ३ | ५·७१ | १८ | १० | २५ |
| „ गतिः | १० | ५ | ३३ | ३९ | २०·६२ | - | ८ | २२ |
| „ „ | ५ | ६ | १६ | ५५ | २५·३१ | - | ४ | ११ |
| मेषसंक्रान्तौ | १८१५ | ६ | ५७ | ३७ | २१·६४ | १८ | २२ | ५८ |

अस्मात्सिद्धं शके १८१९ वर्षे मेषसंक्रमणं द्वाविंशतितिथिसंनिधौ नाम चैत्रकृष्ण ७ म्याः समीपस्थे शुक्रवासरे गतघट्यः ५७ पः ३७ एतत्परिमिते काले स्यादिति । परं

स्वयं कालः शके १८०० वर्षस्य सूर्यपरमफलोच्चानुसारी । स वारविकारेण युतश्चे-दिष्टवर्षे सूर्यफलोच्चानुसारी भवति ।

### अथ संक्रमणमहानक्षत्रार्थं न्यासः ।

| विवरणम् | मेषस. | | | | वृषभस. | | | | मिथुनस. | | | | आर्द्रान. | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | वा. | घ | प | ति | वा. | घ. | प | ति | वा | घ | प | ति | वा. | घ | प | ति |
| शके १८१५ | ६ | ५७ | ३७ | २२ | ६ | ५७ | ३७ | २२ | ६ | ५७ | ३७ | २२ | ६ | ५७ | ३७ | २२ |
| को ११ भेद | · | | · | · | २ | ४८ | ४४ | ३१ | ६ | ३ | ३ | ६३ | ६ | १ | ५६ | ७१ |
| ,, वारविकार | + | · | २ | | − | · | १ | | − | · | ४ | | − | · | ५ | · |
| | ६ | ५७ | ३९ | २२ | २ | ४६ | २० | ५३ | ० | ० | ३६ | ८५ | ५ | ५९ | २८ | ९३ |

अस्मिन्न्यासे प्रथमपङ्क्तौ मेषसंक्रमणवारास्तिथिश्चासकृल्लिखितौ । तेषामध एकादश-कोष्ठकस्था भेदाः, तेषामधो वारविकाराः । एवं प्रतिसंक्रमणं प्रतिनक्षत्रं च सख्यात्रय-मङ्कीकृत्य पृथक्काठास्तत्समीपस्थतिथयश्चोत्पादिताः । अत्र मेषसंक्रमणगणिते ये द्वे पले दृश्येते तयोर्गणितमेवम्—मेषस्य पलात्मको वारविकारः +० १३६ व., अत्र वकारो वर्षगणोपलक्षणत्वात् १९ तुल्यः । अतो वर्षविकारं +०·१३६ पञ्चदशभिः संगुण्य +२·४ पले लभ्येते । एवमन्येषामपि वारविकारा गणनीयाः । अतः फलितं यत्—शके १८१९ वर्षे आषाढशुक्लतृतीयायाः संनिहिते गुरुवासरे गतघ. ५९ प० २८ एतस्मिन्क्षणे रवेरार्द्रानक्षत्रे प्रवेशः स्यादिति । परं त्विमे काला उज्जयिनीरेखासंबन्धिनः । अतो रेखान्तरेण युताश्चेद्रेखान्तरस्थग्रामसंबन्धिनो भवेयुः ।

इदानीं विषुवायनर्तूनां गणितमुच्यते—

> द्वादशकोष्ठध्रुवगतिसंयुक्तौ वर्षपस्तथा शुद्धिः ॥
> अयनांशयुक्तभानोरुदगयनारम्भकालिकौ स्याताम् ॥ १९ ॥
> उदगयनकालतिथ्योर्द्वादशकोष्ठोत्तरार्धगतभेदाः ॥
> वर्षगणघ्नविकारा युक्ताश्चेदयनविषुवकालाः स्युः ॥ २० ॥

आदाविष्टशकवर्षस्य यौ वर्षपस्तिथिशुद्धिश्च तयोर्द्वादशकोष्ठकस्थं ध्रुवं वर्षगणगतिं च संयोज्य सायनसूर्यस्योदगयनारम्भकालिकौ वारस्तिथिश्च साध्यौ । अनन्तरमेतयो-र्द्वादशकोष्ठस्यापरदलस्थान्भेदान्वर्षगणघ्नविकाराश्च पृथक्पृथग्युक्त्वाऽन्येषां विषुवायना-दीना कालाः साध्याः ।

| | अब्दपः | | | शुद्धिः |
|---|---|---|---|---|
| | वा. | घ. | प. | ति. |
| शके १८१५ वर्षे.................... | ६ | ५७ | ३७ | २१·६४ |
| को. १२ शके १८०० उद्गयनध्रुवः | ५ | ४७ | १२ | २६१·८६ |
| „ १० वर्षगतिः.... | ६ | ५१ | ३० | — ०·१४ |
| „ ५ वर्षगतिः.... | ६ | ५५ | ४५ | — ०·०७ |
| १८१५................ | ५ | ३२ | ५ | २८३·२९ |
| सायनसूर्यस्योद्गयने.................. | | कालः | | तिथिः |

अयमुद्गयनकालः स्वकीयेन वर्षगणनिघ्नविकारेण पृथग्युतश्चेत्सूक्ष्मतमः स्यात्। द्वादशकोष्ठकस्यापरदल उद्गयनस्य विकारः प० + १·९२७ व, एतावानस्ति। अस्य वर्षगणेन गुणनाज्जातानि विकारपलानि + १·९२७ × १५ = + २८·९। एभिः पूर्वसिद्धकाले संयोजिते जातः सूक्ष्मकालः वा· ५ ३२ ३४। अतः सिद्धं यत्—शके १८१५ वर्षे २८३ तिथिसमीपे नाम मध्यवर्तिन्यधिकवैशाखे संख्यायमाने मार्गशीर्षमासे त्रयोदश्याः समीपे यो गुरुवारस्तद्दिने उज्जयिन्यां गतघट्यः ३२ प० ३४, एतस्मिन्काले रवेरुदगयनं स्यादिति।

अथ विषुवादिकानां गणितदर्शनार्थं न्यासः। अत्राविकृतोद्गयनकालो ग्राह्यः, विषुवादीनां विकारभिन्नत्वात्।

| विवरणम् | वसन्तविषुवम् | | | | दक्षिणायनम् | | | | शरद्विषुवम् | | | | द्वि. व. विषुवम् | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| शा. १८१५ | वा. | घ. | प. | ति. | वा. | घ. | प | ति | वा. | घ. | प. | ति. | वा. | घ. | प | ति |
| उद्गयने | ५ | ३२ | ५ | २८४ | ५ | ३२ | ५ | २८४ | ५ | ३२ | ५ | २८४ | ५ | ३२ | ५ | २८४ |
| वारभेद. | ३ | ४७ | ५९ | —२८१ | ५ | ३८ | ३९ | —१८६ | १ | १४ | ४८ | — ९१ | ५ | २ | ७ | ९० |
| विकार. | +० | ० | १२ | ० | — | ० | २८ | ० | — | ० | १३ | | | ० | १२ | |
| शा. १८१५ | २ | २० | १६ | ३ | ४ | १० | १६ | ९८ | ६ | ४६ | ४० | १९३ | ३ | ८४ | २२ | ३७४ |

उपरितनान्न्यासात्सिद्धं यत्—शके १८१५ चैत्रशुक्ल ३ यायाः समीपस्थे भौमवासरे घ० २० प० १६ परिमिते काले वसन्तविषुवं, तथा—आषाढशु० ८ म्याः समीपे बुधवासरे घ० १० प० १६ काले दक्षिणायनं च भवेदिति। एवमन्येषामपि। अत्र पलानामग्रे स्थितास्तिथयो वर्षारम्भाद्गता इति बोध्यम्। अत एव ९८ तमी तिथिराषाढशु० ८ मी भवति। एते काला आवन्ताः, इष्टग्रामीयाणामपेक्षायां रेखान्तरेण संस्कार्या इति पूर्वं कथितमेव।

इति सूर्यसंक्रमणप्रकरणम्।

# अथ पञ्चाङ्गगणिताच्चन्द्रसूर्यानयनम् ।

तत्राऽऽदौ मध्यमभोगगणितम्—

सप्तेषुपञ्च ५५७ कलिकान्वितमर्यमभध्रुवो* भवेच्चन्द्रः ।
स तृतीयकरणहीनो राहुः स्यात्तिथिविशर्वाजितः सूर्यः ॥ २१ ॥
प्रथमोपकरणहीनः सूर्यः स्वोच्चं द्वितीयकरणेन ।
हीनश्चेद्विधुतुङ्गं मध्यान्येतानि मध्यतिथ्यन्ते ॥ २२ ॥

मध्यमतिथ्यन्ते यो मध्यमनक्षत्रध्रुवः सोंऽशादिषु परिणामितः सप्तपञ्चाशदधिकपञ्चशतकलाभिः सप्तदशकलाधिकैर्नवांशैर्वा सहितश्चेदंशादिर्मध्यमचन्द्रो भवति । मध्यमचन्द्रो द्वि स्थापितः सन्नेकत्र तृतीयकरणेन रहितो राहुर्भवति, अन्यत्र द्वादशगुणितमासिकतिथिमितैरंशैर्वाजितो मध्यमरविः स्यात् । एवं लब्धरविं द्वि संस्थाप्य स एकत्र प्रथमोपकरणेन, अन्यत्र द्वितीयोपकरणेन रहितश्चेत्क्रमेण रविचन्द्रयोरुच्चभोगौ भवतः । इमानि सर्वाणि मध्यममानानि मध्यमतिथ्यन्तत्कालिकानीति ध्येयम् ।

उदाहरणम्—पूर्वस्मिन्पञ्चाङ्गगणिते तृतीयन्यासे मध्यमपूर्णिमान्तः उज्जयिन्यां शनिवासरे २४ घ. ५९ पलेष्वभवदिति सिद्धम् । तर्हि तावदेतत्कालिकानां चन्द्रादिकानां मध्यमभोगान्प्रचक्ष्व । निर्दिष्टकाले—प्र० उ० २६८° ९२, द्वि० उ० १३०°३२, तृ० उ० १६०°२८, एतन्मितानि सन्ति । अत्र प्रथमोपकरणस्याग्रे द्विनवति शतांशाः सन्ति, ते षष्टिगुणिताः ५५२० शतभक्ताः ५५'२० कला भवन्तीति गाणितिका जानन्त्येव । पूर्णिमा पञ्चदशी मासिकी तिथिः । अस्या द्वादशभिर्गुणनाज्जाता १८० अंशाः, इदं मध्यमपूर्णमास्यन्ते मध्यमचन्द्रसूर्ययोरन्तरम् ।

न्यासः ।

| | | | |
|---|---|---|---|
| म नक्षत्रध्रुव | १६२° | २१ | ६ |
| सप्तेषुपञ्चकला | +९ | १७ | ० |
| म चन्द्र | १७१ | ३८ | ६ |

| | | | |
|---|---|---|---|
| म चन्द्र | १७१° | ३८ | ६ |
| तृ० करणेन | −१६० | १६ | ८ |
| म राहु | ११ | २१ | ८ |

| | | | |
|---|---|---|---|
| म चन्द्र | १७१° | ३८ | ६ |
| −(१५×१२°)= | −१८० | ० | ० |
| म रवि | ३५१ | ३८ | ६ |

| | | | |
|---|---|---|---|
| म रवि | ३५१° | ३८ | ६ |
| प्र उप | −२६८ | ५५ | २ |
| रव्युच्चम् | ८२ | ४३ | ३ |

| | | | |
|---|---|---|---|
| म रवि | ३५१° | ३८ | ६ |
| द्वि उप | −१३० | १९ | २ |
| चन्द्रोच्चम् | २२१ | १९ | ४ |

इदानीं पञ्चानां मध्यमदिनगतिकला उच्यन्ते—

राहोर्गुणा ३ विधूच्चस्य रसा ६ रवितुङ्गकस्य खं ० भानोः ।
एकोनषष्टि५९कलिकाः कङ्कनगा ७९१ दिनगतिस्तु चन्द्रमसः ॥ २३ ॥

---

* ध्रुवशब्दो भगार्थपर इति सर्वत्र ज्ञेयम् ।

स्पष्टोऽर्थ ।

इदानीं चन्द्रसूर्ययो. स्पष्टभोगानयन कथ्यते—

स्पष्टा भमितिश्चन्द्रः स्फुटतिथिहीनः स्फुटो भवत्यर्कः ।
अष्टमनवमपदाभ्यां सिध्यति चन्द्रार्कयोः क्रमाद्द्युगतिः ॥ २४ ॥
राहूनस्फुटशशिना चतुर्दशाद्विधुशरं समानीय ।
पञ्चदशस्थफलेन च यदि युक्तः कर्षणस्फुटः स स्यात् ॥ २५ ॥
नवमपदादिनबिम्बं विधुगत्या षोडशाच्च विधुबिम्बम् ।
भूभा क्षितिजविलम्बनलिप्ताः साध्या विधुग्रहावसरे ॥ २६ ॥

लवीकृत स्पष्टनक्षत्रध्रुव एव स्पष्टचन्द्र, अथ स्पष्टतिथिध्रुवेणाशात्मकेन रहित. सन्स्पष्टो रवि स्यात् । अथ चन्द्रशरानयनम् । स्पष्टचन्द्राद्राहुमपास्य शेषेण चतुर्दश-कोष्ठकाच्चन्द्रशरमानीय स पृथक्स्थाप्य । ततोऽस्याऽऽकर्षणसंस्कारसिद्ध्यर्थं पञ्चदश-कोष्ठकस्योपकरण साध्यम्। तद्यथा—पूर्वसिद्धोंऽशात्मकस्पष्टतिथिध्रुवो द्विगुणश्चतुर्दश-कोष्ठकस्य करणेन रहित सन्पञ्चदशकोष्ठकस्य करण भवति। अनेन विधुशरस्य कर्षण सस्कारमादाय तेन पृथक्स्थापितश्चन्द्रशर सस्कृत सन्स्फुटतर स्यात् । विधुग्रहप्र-सक्तौ षोडशकोष्ठकाच्चन्द्रदिनस्पष्टगत्या विधुबिम्ब, भूभा, परमलम्बन, मानैक्यमानान्त-रमान्द्यखण्डानि च ग्राह्याणि ।

उदाहरणम्—पञ्चाङ्गगणितस्य चतुर्थन्यासे शके १८१९ चैत्रशु. १५या शनिवासर उज्जयिन्या गतासु २४ घ. ५५ पलेषु च सिद्ध स्पष्टनक्षत्रध्रुव १३ ११९′, स्पष्टतिथि १५ १०१′ तथैव मध्यमगणिते राहु ११° २१′ ८, एभि स्पष्टाश्चन्द्रसूर्यचन्द्रशरादीनानय ।

स्पष्टनक्षत्रध्रुव १३ ११९′, अयमशेषु परिणामित (१३×८००′ + ११९′) − ६०′ = जात स्पष्टश्चन्द्रः १७५° १९′ । स्पष्टतिथि १५ १०१′, अशेषु परिणाम्य १५ × १२° + १° ४१′ = लब्ध चन्द्रसूर्ययोरन्तरम् १८१° ४१′। अनेन स्पष्टचन्द्रे रहिते जात स्पष्टरविः ३५३° ३४′, अस्मान्मध्यमरविं ३५१° ३८′ ६ विशोध्य लब्ध रविफलं धन १° ५५′ ४ ।

नवमकोष्ठके ग्र० उ० २६८°, अनेन रविस्पष्टदिनगतिः ५९′, बिम्ब ३२′, च लभ्येते । अष्टमकोष्ठकात्—द्वि० उ० १३१°, ति० १५, आभ्या लब्धा चन्द्र दिनस्पष्टगतिः ७३४′, अनया षोडशकोष्ठकात्परमलम्बन (क्षितिजासक्ते चन्द्रे) ५५′ २, चन्द्रबिम्ब ३०′ १, भूभाबिम्ब ७८′ ५, मान्द्यखण्ड ८६′ ३, मानैक्यखण्ड ५४′ ३, मानान्तरखण्ड २४′ २ च लभ्यन्ते ।

अथ चन्द्रशरसाधनम्। स्प० चं० १७९° १′, राहुः ११° २२′, अनयो-रन्तरेण १६३°५३′ कोष्ठकात् १४ लब्धश्चन्द्रशरः + १°२४′·५। अथा-स्याऽऽकर्षणसंस्कारः—स्पष्टतिथ्यावंशरूपायां १८१°·७, द्विगुणायां ३६३°·४, चतुर्द-शकोष्ठककरणेनांशरूपेण १६३·९ रहितायां जातं पञ्चदशकोष्ठकस्य करणं १९९°·५। अनेन शरसंस्कारं – २·′९ लब्ध्वा तेन पृथक्स्थं चन्द्रशरं संस्कृत्य लब्धः स्पष्टतरः शरः + १° २१′·६, *अयं धनत्वादुदङ्मुखो नाम, उत्तरः।*

इति पञ्चाङ्गान्तर्गतं सूर्यचन्द्रगणितम्।

---

## अथ रविक्रान्ति-चर-रव्युदयान्तराणां गणितमुच्यते।

दशमपदादयनांशास्तद्युतसूर्येण सप्तदशकोष्ठात्।
अर्कक्रान्तिश्चाष्टादशकोष्ठादुद्गमान्तरं द्युमणेः॥ २७॥
एकोनविंशकोष्ठात्क्रान्त्यक्षलवैश्चरं च विंशपदात्।
रेखान्तरमक्षांशाः पलभाः साध्याः प्रसिद्धनगराणाम्॥ २८॥

दशमपदादयनांशाः साध्याः। अयनांशयुतेन स्पष्टसूर्येण सप्तदशकोष्ठात्सूर्यक्रान्तिः सिध्यति। तेनैव सूर्येणाष्टादशपदकात्सूर्यस्योदयान्तरं ग्राह्यम्। क्रान्त्यक्षाभ्यामेकोनविं-शाच्चरं साध्यम्। विंशकोष्ठे प्रसिद्धनगराणां रेखान्तरमक्षांशाः पलभाः पठिताः सन्ति।

अत्रोदाहरणम्—पूर्वं दशमपदादयनांशाः साधिता एव, तैः १८°२३′ युतः स्पष्टरविः ३५३° ३४′ जातः सायनः ११° ५७′, अनेन कोष्ठकात् १७ लब्धा रविक्रान्तिरुत्तरा + ४° ४३·′६। तथा च— अष्टादशकोष्ठक उदयान्तरप-लानि + ८। कोष्ठके २० शे श्रीक्षेत्रकाश्याम्—उत्तराक्षांशाः २५°२०′ पलभा-ङ्गुलानि ५ व्यं० ४, रेखान्तरं पूर्वतः ७२ प०। ऊनविंशकोष्ठकात्—श्रीकाशीक्षेत्रा-क्षांशैः २५°२०′, रविक्रान्त्या च ४°४४′, लब्धं चरं + २३ प०। इमानि सर्वाणि शके १८१९ चैत्रशु० १९ शनिवासरे घ० २४ प० ५१, एतत्कालिकानि सन्ति।

### अथ कालगणितम्।

अथोज्जयिनीमध्यमकालादिष्टग्रामेऽर्कसावनकालानयनमुच्यते—

आवन्तो रेखान्तर-चर-पञ्च-पलैर्युतस्तथा रहितः।
उदयान्तरेण शेषं तद्ग्रामेऽर्कोदयाद्गतः कालः॥ २९॥

उज्जयिनीमध्यमकाले रेखान्तरं, चरकालं, पञ्चपलानि च प्रक्षिप्य यल्लभ्यते तस्मा-दुदयान्तरे विशोधिते शेषमिष्टग्रामे सूर्योदयाद्गतकालः स्यात्।

उदाहरणम्—प्रागुक्ते पञ्चाङ्गगणिते शके १८१९ चैत्रशुक्ल १५यां सिद्धाः स्पष्टतिथिनक्षत्रयोगाः श्रीक्षेत्रकाश्यां सूर्योदयात्कियता कालेन समाप्तिमुपेयुस्तद्वद। अत्र रेखान्तरचरपञ्चपलानामैक्यं + ७२ प. + २३ प. + ५, प. = १०० पलानि, अस्मादुदयान्तरं + ८ प., विशोध्य लब्धः संस्कारः + ९२ प.। अनेन पूर्वानीता उज्जयिनीमध्यमकालाः संस्कार्याः।

| | १५ तिथि. | ह. नक्षत्रम् | व्या. योगः |
|---|---|---|---|
| | वा. घ. प. | वा. घ. प. | वा. घ. प. |
| उज्जयिनीम० कालाः .... .... | ० १६ ५ | ० १५ ४० | ० ४५ ३२ |
| संस्कारः + ९२ प. .... .... | + १ ३२ | + १ ३२ | + १ ३२ |
| श्रीकाश्यां सूर्योदयात् .... .... | ० १७ ३७ | ० १७ १२ | ० ४७ ४ |

इदानीं दिनमानं रात्रिमानं तथा सूर्यस्योदयमध्यास्तमया मध्यमकालाश्चोच्यन्ते—

दशपलयुक्तत्रिंशन्नाड्यो द्विगुणितचरेण युक्ताः स्यात्।
दिनमानं तद्धीनाः षष्टिर्घट्यो भवेन्निशामानम् ॥ ३० ॥
याम्योत्तरमधितिष्ठति सूर्ये मध्याभिधस्य कालस्य।
उदयान्तरयुतशरभू १५ मिता नाड्यो गता इति ज्ञेयम् ॥ ३१ ॥
मध्याह्नो द्युदलेन च हीनः सूर्योदये, युतोऽस्तमये।
मध्यमकालः स स्यात्तेन नियम्यानि कालयन्त्राणि ॥ ३२ ॥

दशपलाधिकत्रिंशद्धटिका द्विगुणितेन चरेण संस्कृत्य यल्लभ्यते तद्दिनमानम्। तस्मिन्षष्टिघटीभ्यो विशोधिते यच्छेषं तद्रात्रिमानं स्यात्। अत्र दश पलानि किरणवक्रीभवनसंबन्धीनि। सूर्यस्य मध्यबिन्दुर्यदा याम्योत्तरवृत्ते तिष्ठति तदा तद्दिने उदयान्तरसंस्कृतपञ्चदशनाडीमितो मध्यमकालो गत इति ज्ञेयं सुधीभिः। अयं मध्याह्नकालो दिनार्धेनात्र रहितः, अन्यत्र युतश्चेत्क्रमात्सूर्यस्योदयास्तयोर्मध्यमकालौ भवतः। यत्र क्षितिजं नगरसमं स्यात्तत्र क्षितिजस्थे सूर्ये मध्यमकालसाधनं युक्तम्। यत्र च पर्वतश्रेणिभिरसमं स्यात्तत्र मध्याह्नवेधान्मध्यमकालसाधनं साधु। एवं सिद्धकालो यन्त्रे यथा गोचरः स्यात्तथा यन्त्रस्थे कालदर्शकाख्ये प्राग्ये प्रकाश्ये।

उदाहरणम्—उक्तदिवसे श्रीकाश्यां दिनमानादीनि प्रचक्ष्व। दशपलाधिकत्रिंशन्नाडीषु ३० १०, द्विगुणितचरेण + ४६ प., संस्कृतासु जातं दिनमानं घ. ३० प० ५६, इदं ६० घटीभ्यो विशोध्य जनितं रात्रिमानं घ. २९ प० ४। अथ मध्यमकालानयनम्—पञ्चदश १५ नाडीषूदयान्तरपलैः + ८ संस्कृतासु जातो मध्याह्ने मध्यमकालः

घ. १९ प. ८। अस्मिन्दिनदलेन घ. १९ प. २८ रहिते जातः सूर्योदये मध्यमकालः घ. ९९ प. ४०, पुनः सहिते जातः सूर्यास्ते मध्यमकालः घ. ३० प. ३६।

अथ केवलेन रेखान्तरेण किं प्रयोजनमिति चेत्तदप्युच्यते—

आवन्तो रेखान्तरयुक्स्थानिकमध्यमाख्यकालः स्यात्।
स्थानिकमध्यमकालो रेखान्तररहित उज्जयिन्याश्च ॥ ३३ ॥

अवन्तिका नाम उज्जयिनी, तत्र यो मध्यमकालः स आवन्तः, उज्जयिनीव्यतिरिक्ते ग्रामान्तरे यो मध्यमकालः स स्थानिकमध्यमकाल इति ज्योतिर्विदां परिभाषा। आवन्तो रेखान्तरेण युत इष्टग्रामे स्था० म० कालो भवति। यद्यपि स्था० म० कालो रेखान्तरेणरहित आवन्तो भवतीति सुगमं तथाऽपि सामान्यजनसंशयनिवृत्त्यर्थं रेखान्तरप्रयोजनमिहोक्तम्।

उदाहरणम्—उक्तदिवसे काश्यां सूर्योदय आवन्तः कियांस्तद्वद। उक्तदिवसे काश्यां सूर्योदये स्थानिकमध्यमकालः घ. ९९ प. ४०, अयं रेखान्तरेण + घ. १ प. १२ वर्जितः सञ्जातः काश्यां सूर्योदय आवन्तः घ. ९८ प. २८। एवंरीत्या स्वग्राम उज्जयिनीमध्यमकालं प्रसाध्य तत्साहाय्येन ग्रहणादिचमत्कृतौ दृग्गणितैक्यपरीक्षा कार्या विचक्षणैः।

इति कालप्रकरणम्।

---

The almanac-makers of the present day have to depend chiefly on the Grahalâghava of Ganesh Daivajna for astronomical computations As some centuries have elapsed since the composition of that book, the necessity of a work giving more accurate results was long felt Under such circumstances, the publication of Mr V B. Ketkar s ज्योतिर्गणितम् will certainly be hailed with delight The principal feature of this book is that it embodies the astronomical discoveries made during the last four centuries with due regard to the principles of European astronomy . The tables employed in the book exhibit great ingenuity as they combine the Hindoo and European methods of calculation and are so constructed as to suit both the चैत्र and रैवत systems of determining longitudes As the book is written in the Sanskrit language, there is no doubt it will be readily accessible to every Pandit and Jyôtishi all over India

RATNAGIRI
20th January 1899

H G GODBOLE
Head Master, Ratnagiri High School

---

The aim of Mr Ketkar's work is to correct the Hindu Calendar He has gone through calculations such as do his industry the very greatest credit Apart from that I consider that his labour has been as patriotic as it is scientific Starting from the long gone past, when correct computations were regularly made, he has brought as I understand the almanac down to the present day and proves that the old Hindu calculations bring about the same results, as are obtained by a different method by western Scientists He enables the Hindu astronomer and theologian to give his marked days their real meaning, and so far substitutes truth for error For these reasons I think Mr Ketkar is deserving of every support, and must receive help to publish a work, which is costly, and cannot be attractive to the general public

F A H ELLIOT.

---

## श्री.

महाशयकेतकरोपाह्वरामकृष्णसूनुवेङ्कटेशविरचितं ज्योतिर्गणिताख्यं ग्रन्थं पर्यालोच्य चिराभिलषितवस्तुप्राप्त्याऽतीव मुदितोऽहम् ॥ सर्वजनानुभूतमेतद्यदिदानीं प्रचलितचिन्तामणिग्रहलाघवादिग्रन्थागतकाले ग्रहणादीनि न दृश्यन्ते ॥

ग्रन्थनिश्चितकालात्प्राक्पश्चाद्वा भवन्ति ॥ तत्तत्कालविहितानि स्नानदानादिकर्माणि यथोक्तकाले कर्तुं दृढमतयोऽपि जनाः सूक्ष्मकालदर्शिग्रन्थाभावादगत्या ज्ञातगणितशैथिल्यानपि प्रचलितग्रन्थानेवानुसरन्ति ॥ अनुमितपूर्वमेतच्छैथिल्यं पूर्वग्रन्थकारैः खेटकर्मणो भूयोभूयोनिरीक्षणेन ॥ अत एव ते स्वस्वकाले पूर्वग्रन्थान्पर्यचालयन्नवान्वा व्यरचयन् ॥ एव गतेऽधुना दृक्प्रत्ययावहग्रन्थस्याऽऽवश्यकतामवलोक्य **श्रीमद्भगवत्प्रेरणयाऽयं** ग्रन्थो ग्रन्थकृता प्रणीतः ॥ अस्य ग्रन्थस्य साहाय्येन यथोक्तकाले जना धर्मकृत्यानि कर्तुं समर्था भवेयु ॥ एवं जनानां कालातिक्रमप्रत्यवायपरिहारद्वारा पुण्यसंपादनेन **मम्मटोक्त**काव्यप्रयोजनानां परमं शिवेतरक्षतिरूपं चतुर्थं प्रयोजनं ग्रन्थकृता संपादितं भवेत् ॥ अधुना नवनवोपलब्धयन्त्राणां शास्त्रान्तराणां च साहाय्येन खेचराणां वेधं गृहीत्वा पाश्चात्यज्योतिःशास्त्रविशारदैः स्वस्वभाषासु दृक्प्रत्ययावहगणितग्रन्था विरचिताः सन्ति ॥ तैर्ग्रन्थैर्निश्चिता ग्रहणादिकालाः पलैक्यमपि न व्यभिचरन्ति ॥ तद्ग्रन्थेभ्यः केवलं मूलाङ्कपङ्क्तिमादायास्मद्देशीयकालगणनापद्धतिमनुसृत्य नवीनोऽयं ग्रन्थो ग्रन्थकृता निर्मितः ॥ अयं ग्रन्थोऽतः पूर्वं सहस्रत्रयावधिवर्षाणामतः परं सहस्रद्वयावधिवर्षाणां गणितकरण उपयुक्त स्यात्॥ असुरयवनप्रणीतग्रन्थेभ्यो ज्ञानग्रहणपद्धतिः पूर्वाचार्यसंप्रदायसिद्धैव ॥ येन पक्षेण दृक्तुल्यता स्यात्स पक्ष एव आदर्तव्य इत्यपि प्राचीनग्रन्थकारैः कण्ठरवेणोक्तम् ॥ तदुक्तं **ग्रहलाघवे**—" शीघ्रं केन्द्रमजार्यमध्यगमितीमे यान्ति दृक्तुल्यतां सिद्धैस्तैरिह पर्वधर्मनयसत्कार्यादिकं त्वादिशेत्" ॥ इति । तथाचोक्तं **जातकपद्धत्यां केशवदैवज्ञैः**—" यन्त्रैः स्पष्टतरोऽत्र जन्मसमयो वेधोऽत्र खेटाः स्फुटा यत्पक्षे हि घटन्ते " इति ॥

तथाऽस्मिन्ग्रन्थे ग्रहलाघववच्छालिवाहनशकवर्षाण्युज्जयिन्या मध्यरेषां चाऽऽश्रित्य कोष्ठका रचिताः ॥ अतो नेयमपूर्वा पद्धतिः ॥ किंतु परिचितैव । तथा चैत्ररैवतपक्षावनुसृत्य पृथक्पृथक्कोष्ठका रचिताः ॥ अत स्वस्वसंमतपक्षानुसारिगणितकरणे न काऽप्यनुपपत्तिः ॥ एवमुभयोः पक्षयोर्गणिते कृते परीक्ष्यान्यतरस्याऽऽश्रयणं सतां सुलभं स्यात् ॥ अस्य ग्रन्थस्य सर्वेषां भारतवर्षीयाणामुपयोगो भूयादिति संस्कृतभाषाऽतीव सुलभा योजिता ॥ संकलनव्यवकलनगुणनभागहरेति-

गणितकर्मचतुष्टयाभिज्ञा अपीमं ग्रन्थमभ्यस्य यथा गणितकरणे समर्था भवेयुस्तथाऽतीव सुलभा विस्तृताश्च कोष्ठका रचिताः ॥ प्राचीनग्रन्थापेक्षयाऽस्मिन्ग्रन्थे ये विशेषास्ते ज्योतिर्विदां चमत्कृतिजनकाः सन्ति ॥ कालविपरिणामाध्यायो व्यवहारज्ञानामतीवोपयुक्तः ॥ **सिद्धान्तशिरोमणिकृतां भास्कराचार्याणां** निवासस्थाननिर्णयस्तथा तद्विरचितदिग्देशकालविषयाणां केषांचिन्मुख्यप्रश्नानां भङ्गप्रकारोऽपि प्रदर्शितः ॥ एवमस्य ग्रन्थस्य प्रणयने ग्रन्थकर्तुरनुपमबुद्धिकौशलं सततपरिश्रमशीलत्वं फलाभिसंधिरहितकर्मपरता चेत्यादयो गुणाः स्फुटं दृश्यन्ते ॥ परमभूषणास्पदमेतन्महाराष्ट्रीयाणां यदेताद्दग्ग्रन्थकर्ता महाराष्ट्रे समुत्पन्न इति ॥ नवीनोऽयं ग्रन्थ इति कथं प्रामाण्यमर्हतीतिसंशयापनोदकं प्रत्यक्षान्नान्यत्प्रमाणमपेक्षितम् ॥ तदुक्तम् **'प्रत्यक्षं ज्योतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ'** ॥ इति । एतद्ग्रन्थानुसारेण कृते गणिते यदि दृक्तुल्यता स्यात्तदाऽस्य स्वीकारो **'बुद्धेः फलमनाग्रहः'** इति न्यायेन बुद्धिमतामुचित एव ॥ अस्य ग्रन्थस्य लोकस्वीकारेण यदि ग्रन्थकर्ता सफलश्रमः स्यात्तदा **" क्लेशः फलेन हि पुनर्नवतां विधत्ते "** इति महाकवेर्भारवेरुक्तिमनुसृत्य पुनर्नवो भूत्वा विद्वज्जनाभिलषितमुपपत्तिग्रन्थमपि निर्मातुमयं ग्रन्थकर्ता समर्थो भूयात् ॥ एवं महता परिश्रमेण ग्रन्थकृता विरचितं ग्रन्थमभ्यस्य ततः स्वस्वपञ्चाङ्गानि निर्माय तदनुरोधात्तत्तत्काले विहितकर्मणामनुष्ठाने जनानां मनांसि प्रवर्तयतामस्मद्वीवृत्तिप्रेरकः परमेश्वर इत्याशास्ते **केळकरोपनाम्कात्मारामतनूजश्चिन्तामणिशास्त्री रत्नागिरिपत्तनस्थाङ्ग्लपाठशालायां** विद्यमानः संस्कृताध्यापकः ॥

रत्नागिरिपत्तनम्
शकाब्दाः १८२१
पौषशुदि चतुर्दश्याम्

